# THE

# साहित्यदर्पण of विश्वनाथ

( Paricchedas I, II, X Arthālankāras )

WITH

EXHAUSTIVE NOTES

BY

Mahāmahopādhyāya

**P. V. KANE,** M. A. LL. M., D. Litt. (All).

ADVOCATE, HIGH COURT, BOMBAY; FELLOW OF THE BOMBAY ASIATIC SOCIETY AND OF THE LONDON SCHOOL OF ORIENTAL AND AFRICAN STUDIES; AUTHOR OF 'HINDU CUSTOMS AND MODERN LAW', 'HISTORY OF DHARMAŚĀSTRA' &c.

*Fourth Edition*

**Price Rs.** [illegible]

1956

॥ श्रीः ॥

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः ।

प्रथमः परिच्छेदः ।

ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया 5
वाग्देवतायाः सांमुख्यमाधत्ते—

**शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।**
**अपहृत्य तमः सन्ततमर्थानखिलान्प्रकाशयतु ॥ १ ॥**

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति काव्यफलान्याह—

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।** 1
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥ २ ॥**

चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत्प्रवर्तितव्यं न रावणादिवदित्यादि-कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव ।

उक्तं च—

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । 15
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' इति ।

किं च । काव्याद्धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना, 'एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके[१] कामधुग्भवति' इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव । अर्थप्राप्तिश्च प्रत्यक्षसिद्धा । कामप्राप्तिश्चार्थद्वारैव । मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसन्धानात्, मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च । चतुर्वर्ग- 20
प्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते । परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव ।

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु किमिति[२] काव्ये यत्नः

---

१ 'स्वर्गे लोके च' इति **ज–ब–**पुस्तकपाठः. २ 'काव्येषु किमिति यत्नः' इति **ज–ब–**पुस्तकपाठः.

करणीय इत्यपि न वक्तव्यम् । कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात् ।

किं च । काव्यस्योपादेयत्वमग्निपुराणेऽप्युक्तम्[1][2]—

'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
5 कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥' इति ।

'त्रिवर्गसाधनं नाट्यम्' इति च । विष्णुपुराणेऽपि—

'काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः ॥' इति ।

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते । एतेनाभिधेयं च प्रदर्शितम् ।
10 तत्किंस्वरूपं तावत्काव्यमित्यपेक्षायां कश्चिदाह[3]—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति । एतच्चिन्त्यम् । तथाहि—यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा[4]—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
15 धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' इति ।

अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात् । प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता । तस्मादव्याप्तिर्लक्षणदोषः । ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वोऽपीति[5] चेत्तर्हि यत्रांशे दोषः सोऽकाव्यत्व-
20 प्रयोजकः, यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात् । न च कंचिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः, किं तर्हि सर्वमेव काव्यम् । तथाहि—काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते । अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् । यदुक्तं ध्वनिकृता—

25 'श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥' इति ।

किं चैवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात् ।

नन्वीषदर्थे नञः प्रयोग इति चेत्तर्हि 'ईषद्दोषौ शब्दार्थौ काव्यम्'

---

१ 'आग्नेयपुराणे' इति ज—ब—पुस्तकपाठः. २ 'अपि' इति ज—ब—पुस्तकयोर्नास्ति. ३ 'आह' इति ज—ब—पुस्तकयोर्नास्ति. ४ 'काव्यत्वं तदा' इति नि—पुस्तकपाठः. ५ 'सर्व एवेति' नि—पुस्तकपाठः.

इत्युक्ते निर्दोषयोः काव्यत्वं न स्यात्। सति सम्भवे 'ईषद्दोषौ' इति चेत्, एतदपि काव्यलक्षणेऽवाच्यम्। रत्नादिलक्षणे कीटानुवेधादिपरिहारवत्। न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः किं तूपादेयतारतम्यमेव कर्तुम्, तद्वदत्र श्रुतिदुष्टादयोऽपि काव्यस्य। उक्तं च—

'कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥' इति। 5

किं च शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्। गुणानां रसैकधर्मत्वस्य 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इत्यादिना तेनैव प्रतिपादितत्वात्। रसाभिव्यञ्जकत्वेनोपचारत उपपद्यत इति चेत्, तथाप्ययुक्तम्। तथा हि—तयोः काव्यस्वरूपत्वेनाभिमतयोः[1] शब्दार्थयो रसोऽस्ति, न वा। 10 नास्ति चेत्, गुणवत्त्वमपि नास्ति। गुणानां तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत्, कथं नोक्तं रसवन्ताविति विशेषणम्। गुणवत्त्वान्यथानुपपत्त्यैतल्लभ्यत इति चेत्, तर्हि सरसावित्येव वक्तुं युक्तम्, न सगुणाविति। न हि प्राणिमन्तो देशा इति वक्तव्ये शौर्यादिमन्तो देशा इति केनाप्युच्यते। ननु 'शब्दार्थौ सगुणौ' इत्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ 15 काव्ये प्रयोज्यावित्यभिप्राय इति चेत्, न। गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि[2] काव्ये उत्कर्षमात्राधायकत्वम्, न तु स्वरूपाधायकत्वम्। उक्तं हि—काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्, इति। एतेन 'अनलङ्कृती पुनः क्वापि' इति यदुक्तम्, तदपि 20 परास्तम्। अस्य ह्यर्थः[3]—

सर्वत्र सालङ्कारौ क्वचित्त्वस्फुटालङ्कारावपि शब्दार्थौ काव्यमिति। तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात्। एतेन 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारोक्तमपि परास्तम्। वक्रोक्तेरलङ्काररूपत्वात्। यत्तु क्वचिदस्फुटालङ्कारत्वे उदाहृतम्— 25

'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥" इति।

एतच्चिन्त्यम्। अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य 30 स्फुटत्वम्। एतेन—

---

१ 'काव्यस्वरूपेण' इति नि—पुस्तकपाठः. २ 'अपि' इति नि—पुस्तके नास्ति. ३ 'अस्यार्थः' इति नि.

'अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥'

इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । यत्तु ध्वनिकारेणोक्तम्—'काव्य-स्यात्मा ध्वनिः–' इति, तत्किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः
5 काव्यस्यात्मा । उत रसादिरूपमात्रो[1] वा । नाद्यः । प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेदोमिति ब्रूमः । ननु यदि रसादिरूपमात्रो ध्वनिः काव्यस्यात्मा, तदा—

'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महँण मज्जहिसि[2] ॥

इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहार इति चेत्, न[3] ।
10 अत्रापि रसाभासवत्तैवेति[4] ब्रूमः । अन्यथा 'देवदत्तो ग्रामं याति' इति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात् । अस्त्विति चेत्, न । रसवत एव काव्यत्वाङ्गीकारात् । काव्यस्य प्रयोजनं हि रसा-स्वादमुखपिण्डदानद्वारा[5] वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रादीनां विनेयानां रामादिवत्प्रवर्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनि-
15 वृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात् । तथा चाग्नेयपुराणेऽप्युक्तम्—'वाग्वै-दग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति । व्यक्तिविवेककारेणाप्युक्तम्—'काव्यस्यात्मनि सङ्गिनि रसादिरूपे न कस्यचिद्विमतिः' इति । ध्वनिकारेणाप्यु-क्तम्—'न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मलाभः[6] । इतिहासादेरेव तत्सिद्धेः' इत्यादि । ननु तर्हि प्रबन्धान्तर्वर्तिनां केषांचिन्नीरसानां पद्यानां काव्यत्वं न
20 स्यादिति चेत्, न । रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन[7] प्रबन्ध-रसेनैव तेषां रसवत्ताङ्गीकारात् । यत्तु नीरसेष्वपि गुणाभिव्यञ्जकवर्णसद्भा-वाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसा-म्याद्गौण एव । यत्तु वामनेनोक्तम्—'रीतिरात्मा काव्यस्य' इति, तन्न । रीतेः सङ्घटनाविशेषत्वात् । सङ्घटनायाश्चावयवसंस्थानरूपत्वात्, आत्मनश्च
25 तद्भिन्नत्वात् । यच्च ध्वनिकारेणोक्तम्—

'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥' इति ।

---

१ 'रसादिमात्ररूपः' इति ज–ब–पुस्तकपाठः. २ 'श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय । मा पथिक रात्र्यन्धक शय्यायामावयोर्मङ्क्ष्यसि' ॥ (महँण इति निपातोऽनेकार्थवृत्तिरत्रावयोरित्यर्थे न तु ममेति लोचनम्). ३ 'न' इति ज–ब–पुस्तकयोर्नास्ति. ४ 'रसाभासवत्तयैव ब्रूमः' इति ज–ब–पुस्तकपाठः. ५ 'सुख-पिण्डदानद्वारेण' इति ज–ब–पुस्तकपाठः. ६ 'आत्मपदलाभः' इति नि–पुस्तकपाठः. ७ 'रसे' इति ज–ब–पुस्तकपाठः.

अत्र वाच्यस्यात्मत्वं[1] 'काव्यस्यात्मा ध्वनिः–' इति स्ववचनविरोधादेवापास्तम् ।

तत्किंस्वरूपं[2] काव्यमित्युच्यते—

## वाक्यं रसात्मकं काव्यं

रसस्वरूपं निरूपयिष्यामः । रस एवात्मा साररूपतया जीवनाधायको यस्य[3] । 5
तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वात्[4] । 'रस्यते इति रसः' इति व्युत्पत्तियोगाद्भावतदाभासादयोऽपि गृह्यन्ते । तत्र रसो यथा—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
निर्द्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं 10
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

अत्र हि सम्भोगशृङ्गाराख्यो रसः ।

भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम्—

'यस्यालीयत शल्कसीम्नि जलधिः, पृष्ठे जगन्मण्डलं,
दंष्ट्रायां धरणी, नखे दितिसुताधीशः, पदे रोदसी । 15
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥'

अत्र भगवद्विषया रतिर्भावः ।

रसाभासो यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । 20
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥'

अत्र सम्भोगशृङ्गारस्य तिर्यग्विषयत्वाद्रसाभासः । एवमन्यत् ।

दोषाः पुनः काव्ये किंस्वरूपा इत्युच्यन्ते—

## दोषास्तस्यापकर्षकाः ।

श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव[5] 25
व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात्काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते । एषां विशेषोदाहरणानि वक्ष्यामः ।

---

१ 'वाच्यात्मत्वम्' इति नि–पुस्तकपाठः' २ 'किं पुनः काव्यम्' इति ज–ब–पुस्तकपाठः. ३ 'अस्य' इति ज–ब–पुस्तकपाठः. ४ 'काव्यत्वानङ्गीकारात्' इति ज–ब–पुस्तकपाठः. ५ 'देहद्वारेणेव शब्दार्थद्वारेण' इति ज–ब–पुस्तकपाठः.

गुणादयः किंस्वरूपा इत्युच्यन्ते—

उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥ ३ ॥

गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थान-विशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तमेव[1] काव्यस्यात्मभूतं रसमुत्कर्षयन्तः 5 काव्यस्योत्कर्षका इत्युच्यन्ते। इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्यते[3]। अतश्च 'गुणाभिव्यञ्जकाः शब्दा रसस्यो-त्कर्षकाः' इत्युक्तं भवतीति प्रागेवोक्तम्। एषामपि विशेषोदाहरणानि वक्ष्यामः॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमा-चार्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहा-पात्रश्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूप-निरूपणो नाम प्रथमः परिच्छेदः।

---

१ 'गुणाः' इति नि-पुस्तकपाठः. २ 'तस्यैव' इति नि-पुस्तकपाठः. ३ 'गुणा-भिव्यञ्जकशब्दार्थयोरुपचर्यते। अतश्च' इति ज-पुस्तके नास्ति.

# द्वितीयः परिच्छेदः ।

वाक्यस्वरूपमाह—

**वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः ।**

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः । पदोच्चयस्यैतदभावेऽपि वाक्यत्वे 'वह्निना सिञ्चति' इत्याद्यपि वाक्यं स्यात् । आकाङ्क्षा प्रतीतिपर्यवसानविरहः । स च श्रोतुर्जिज्ञासारूपः । निराकाङ्क्षस्य वाक्यत्वे 'गौरश्वः पुरुषो हस्ती' इत्यादीनामपि वाक्यत्वं स्यात् । आसत्तिर्बुद्ध्यविच्छेदः । बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चरितेन गच्छतीति पदेन सङ्गतिः स्यात् । अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्मत्वेऽपि पदोच्चयधर्मत्वमुपचारात् ।

**वाक्योच्चयो महावाक्यम्**

योग्यताकाङ्क्षासत्तियुक्त एवं[1] ।

**इत्थं वाक्यं द्विधा मतम् ॥ १ ॥**

इत्थमिति वाक्यत्वेन महावाक्यत्वेन[2] च । उक्तं च—

'स्वार्थबोधे[3] समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' इति ।

तत्र वाक्यं यथा—'शून्यं वासगृहं–' इत्यादि । महावाक्यं यथा—रामायणमहाभारतरघुवंशादि ।

पदोच्चयो वाक्यमित्युक्तम्, तत्र किं पदलक्षणमित्यत आह—

**वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।**

यथा—घटः । प्रयोगार्हेति प्रातिपदिकस्य व्यवच्छेदः । अनन्वितेति वाक्यमहावाक्ययोः । एकेति साकाङ्क्षानेकपदवाक्यानाम् । अर्थबोधका इति कचटतपेत्यादीनाम्[4] । वर्णा इति बहुवचनमविवक्षितम् ।

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥ २ ॥**

एषां स्वरूपमाह—

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥३॥**

---

१ 'युक्त इत्येव' इति नि. २ 'वाक्यमहावाक्यत्वेन' इति नि. ३ 'बोधसमाप्तानाम्' इति ज–ब. ४ 'कचटतपानाम्' इति ज–ब.

ता अभिधाद्याः ।

**तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा ।**

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'गामानय' इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य 'सास्नादिमत्पिण्डानयनमर्थः' इति प्रथमं प्रति-
5 पद्यते । अनन्तरं च 'गां बधान, अश्वमानय' इत्यादावावापोद्वापाभ्यां गोशब्दस्य 'सास्नादिमानर्थः' आनयनशब्दस्य च 'आहरणमर्थः' इति सङ्केतमवधारयति । क्वचिच्च प्रसिद्धपदसमभिव्याहारात्[1] । यथा—'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र । क्वचिदाप्तोपदेशात् । यथा—'अयमश्वशब्दवाच्यः' इत्यत्र । तं च सङ्केतितमर्थं बोधयन्ती शब्दस्य
10 शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम ।

**सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ ४ ॥**

जातिर्गोपिण्डादिषु गोत्वादिका । गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्मः । शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्तयन्ति । द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः । क्रियाः
15 साध्यरूपा वस्तुधर्माः पाकादयः । एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूत[2]व्यापारकलापः पाकादिशब्दवाच्यः । एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते । न व्यक्तौ । आनन्त्यव्यभिचारदोषापातात् ।

अथ लक्षणा—

**मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते ।**
20 **रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥ ५ ॥**

'कलिङ्गः साहसिकः' इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन्यया शब्दशक्त्या स्वसंयुक्तान्पुरुषादीन्प्रत्याययति, यया च 'गङ्गायां घोषः' इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात्प्रकृतेऽसम्भवन्स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभावि-
25 केतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम । पूर्वत्र हेतू रूढिः प्रसिद्धिरेव । उत्तरत्र 'गङ्गातटे घोषः' इति प्रतिपादनादलभ्य[3]स्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् । हेतुं विनापि यस्य कस्यचित्सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्युक्तम्—'रूढेः प्रयोजनाद्वापि' इति ।

---

१ 'प्रसिद्धार्थसमभिहारात्' इति **नि.** २ 'भूतो व्यापारकलापः' इति **नि.**
३ 'प्रतिपादनालभ्यस्य' इति **नि.**

केचित्तु 'कर्मणि कुशलः' इति रूढावुदाहरन्ति । तेषामयमभिप्रायः–कुशाँल्लातीति[1] व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन्विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति । तदन्ये न मन्यन्ते । कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् । अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे 5 'गौः शेते' इत्यत्रापि लक्षणा स्यात् । 'गमेर्डोः' इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि[2] प्रयोगात् ॥

तद्भेदानाह—

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ ६ ॥** 10

रूढावुपादानलक्षणा यथा—'श्वेतो धावति' । प्रयोजने यथा—'कुन्ताः प्रविशन्ति' । अनयोर्हि श्वेतादिभिः कुन्तादिभिश्चाचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयान्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते । पूर्वत्र प्रयोजनाभावाद्रूढिः । उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम् । अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम् । लक्षण- 15 लक्षणायां तु परस्यैवोपलक्षणमित्यनयोर्भेदः । इयमेवाजहत्स्वार्थेत्युच्यते ॥

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये ।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ ७ ॥**

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—'कलिङ्गः साहसिकः', 'गङ्गायां घोषः' इति च । अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मान- 20 मर्पयतः ।

यथा वा—

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥'

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । 25 अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधो वैपरीत्यलक्षणः सम्बन्धः फलमपकारातिशयः । इयमेव जहत्स्वार्थेत्युच्यते ॥

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ।**

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः ।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥ ८ ॥** 30

---

१ 'कुशं लातीति' ज–ब. २ 'कालेऽप्रयोगात्' इति नि.

## सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका ।

रूढावुपादानलक्षणा[1] सारोपा यथा—'अश्वः श्वेतो धावति' । अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेत[2]गुणतादात्म्येन प्रतीयते । प्रयोजने यथा—'एते कुन्ताः प्रविशन्ति' । अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात्सारोपत्वम् । रूढौ लक्षणलक्षणा सारोपा यथा-'कलिङ्गः पुरुषो युध्यते' । अत्र पुरुषकलिङ्गशब्दयोराधाराधेयभावः सम्बन्धः । प्रयोजने यथा—'आयुर्घृतम्' । अत्रायुष्कारणमपि घृतं कार्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते । अन्यवैलक्षण्येन (अव्यभिचारेण) आयुष्करत्वं प्रयोजनम् ।

यथा वा—राजकीये पुरुषे गच्छति 'राजासौ गच्छति' इति । अत्र स्वस्वामिभावलक्षणः सम्बन्धः । यथा वा—अग्रमात्रेऽवयवै[3]व 'हस्तोऽयम्' । अत्रावयवावयविभावलक्षणः सम्ब[4]न्धः । ब्राह्मणे[5]ऽपि 'तक्षासौ' । अत्र तात्कर्म्यलक्षणः । इन्द्रार्थासु स्थूणासु 'अमी इन्द्राः' । तत्र तादर्थ्यलक्षणः सम्बन्धः । एवमन्यत्रापि । निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत्साध्यवसाना । अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव ॥

## सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥ ९ ॥
## सादृश्यात्तु मता गौण्यस्तेन षोडश भेदिताः ।

ताः पूर्वोक्ता अष्टभेदा लक्षणाः । सादृश्येतरसम्बन्धाः कार्यकारणभावादयः । अत्र शुद्धानां पूर्वोदाहरणान्येव । रूढावुपादानलक्षणा सारोपा गौणी यथा—'एतानि तैलानि हेमन्ते सुखानि' । अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिषु स्नेहेषु वर्तते । प्रयोजने यथा—राजकुमारेषु तत्सदृशेषु च गच्छत्सु 'एते राजकुमारा गच्छन्ति' । रूढावुपादानलक्षणा साध्यवसाना गौणी यथा-'तैलानि हेमन्ते सुखानि' । प्रयोजने यथा—'राजकुमारा गच्छन्ति' । रूढौ लक्षणलक्षणा सारोपा गौणी यथा—'राजा गौडेन्द्रं कण्टकं शोधयति' । प्रयोजने यथा—'गौर्वाहीकः' । रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा—'राजा कण्टकं शोधयति' । प्रयोजने यथा—'गौर्जल्पति' ।

---

१ 'विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत्सारोपा । इयमेव रूपकालङ्कारस्य बीजम् ।' इत्येतत् 'रूढौ' इत्यस्मात्प्राक् नि-पुस्तके दृश्यते. २ 'श्वेत' इति नि-पुस्तके नास्ति. ३ 'अवयवभागे' इति नि. ४ 'लक्षणसम्बन्धः' इति नि. ५ 'ब्राह्मणोऽपि' इति नि.

अत्र केचिदाहुः—गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते । ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति । तदयुक्तम् । गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुमसामर्थ्यात्[1] गोशब्दार्थमात्रबोधनाच्च । अभिधाया विरतत्वाद् विरतायाश्च पुनरुत्थाना[2]भावात् ।

अन्ये च पुनर्गोशब्देन वाहीकार्थो नाभिधीयते । किं तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते । तदप्यन्ये न मन्यन्ते । तथाहि—अत्र गोशब्दाद्वाहीकार्थः प्रतीयते, न वा । आद्येऽपि[3] गोशब्दादेव वा । लक्षिताद्वा गुणादविनाभावद्वारा । तत्र न प्रथमः । वाहीकार्थेऽ[4]स्यासङ्केतितत्वात् । न द्वितीयः । अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात् । शाब्दी ह्याकाङ्क्षा शब्देनैव प्र[5]पूर्यते । न द्वितीयः । यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयेत[6], तदास्य वाहीकशब्दस्य च[7] सामानाधिकरण्यमसङ्गतं[8] स्यात् ।

तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद्वाहीकार्थं लक्षयति । वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम् । इयं च गुणयोगाद्गौणीत्युच्यते । पूर्वा तूपचारामिश्रणाच्छुद्धा । उपचारो हि नामात्यन्तं विशकलितयो[9]: सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम् । यथा—'अग्निमाणवकयोः' । शुक्लपटयोस्तु नात्य[10]न्तं भेदप्रतीतिः । तस्मादेवमादिषु शुद्धैव लक्षणा ।

**व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः ॥ १० ॥**

प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः । तत्र गूढः काव्या[11]र्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः । यथा—'उपकृतं बहु तत्र'—इति । अगूढः, अतिस्फुटतया सर्वजनसंवेद्यः । यथा—

उपदिशति कामिनीनां यौवनमद एव ललितानि ।'

अत्र 'उपदिशति' इत्यनेन 'आविष्करोति' इति लक्ष्यते । आविष्कारातिशयश्चाभिधेयवत्स्फुटं प्रतीयते ।

**धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा ।**

---

१ 'अशक्यत्वात्' इति **नि.** २ 'उत्थापनाभावात्' इति **नि.** ३ 'अपि' इत्येतन्नास्ति **नि**–पुस्तके. ४ 'वाहीकार्थस्य' इति **नि.** ५ 'पूर्यते' इति **नि.** ६ 'प्रतीयते' इति **ज–ब.** ७ 'च' इति नास्ति **ज–ब**–पुस्तकयोः. ८ 'असमञ्जसं' इति **ज–ब.** ९ 'शब्दयोः' इत्येतदधिकं **नि**–पुस्तके. १० 'अत्यन्तभेद–' इति **नि.** ११ 'वाक्यार्थ–' इति **नि.**

एता अनन्तरोक्ताः षोडशभेदा लक्षणाः फलस्य धर्मिगतत्वेन धर्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः ।

दिङ्मात्रं यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
5 वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम् । 'गङ्गायां घोषः' इत्यत्र तटे[1] शीतत्वपावनत्वरूपधर्मस्यातिशयः फलम् ।

10 **तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥ ११ ॥**

रूढावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ।

किं च—

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ।**

ता अनन्तरोक्ताश्चत्वारिंशद्भेदाः । तत्र पदगतत्वेन[2] यथा—'गङ्गायां
15 घोषः' । वाक्यगतत्वेन[3] यथा—'उपकृतं बहु तत्र' इति । एवमशीतिप्रकारा लक्षणा ॥

अथ व्यञ्जना

**विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ॥ १२ ॥**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।**

20 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेनाभिधालक्षणातात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वोपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्[4]व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ।

तत्र—

25 **अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥ १३ ॥**

अभिधामूलामाह—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥ १४ ॥**

---

१ 'तटादिषु लक्ष्येषु' इति **ज–ब.** २ 'पदगतत्वे' इति **नि.** ३ 'वाक्यगतत्वे' इति **नि.** ४ 'शक्तिः' इति **नि.**

आद्यशब्दाद्विप्रयोगादयः।[1]

उक्तं हि—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। 5
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति।

'सशङ्खचक्रो हरिः' इति शङ्खचक्रयोगेन हरिशब्दो विष्णुमेवाभिधत्ते। 'अशङ्खचक्रो हरिः' इति तद्वियोगेन[2] तमेव। 'भीमार्जुनौ' इति अर्जुनः पार्थः। 'कर्णार्जुनौ' इति कर्णः सूतपुत्रः। 'स्थाणुं वन्दे' इति स्थाणुः शिवः। 'सर्वं जानाति देवः' इति देवो भवान्। 'कुपितो मकरध्वजः' 10 इति मकरध्वजः कामः। 'देवः पुरारिः' इति पुरारिः शिवः। 'मधुना मत्तः पिकः' इति मधुर्वसन्तः। 'पातु वो दयितामुखम्' इति मुखं सांमुख्यम्। 'विभाति गगने चन्द्रः' इति चन्द्रः शशी। 'निशि चित्रभानुः' इति चित्रभानुर्वह्निः। 'भाति रथाङ्गम्' नपुंसकव्यक्त्या रथाङ्गं चक्रम्। स्वरस्तु वेद एव विशेषप्रतीतिकृन्न काव्य इति तस्य विषये नोदाहृतम्[3]। 15

इदं च केप्यसहमाना आहुः—'स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव। उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेत्येतद्विषये उदाहरणमुचितमेव' इति। तन्न। तथाहि—स्वराः काक्वादयः उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम्। किं च। यदि यत्र 20 क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः। न च तथा। अत एवाहुः श्लेषनिरूपणप्रस्तावे—"-'काव्यमार्गे स्वरो न गण्यते' इति च नये" इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण। आदिशब्दात् 'एतावन्मात्रस्तनी—' इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां 25 कमलकोरकाद्याकारत्वम्।

एवमेकस्मिन्नर्थेऽभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः[4] शक्तिः साभिधामूला व्यञ्जना।

यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्— 30

---

१ 'आदिशब्दात्' इति **नि.** २ 'वियोगेन' इति **ज—ब.** ३ 'विषयो नोदाहृतः' इति **नि.** ४ 'शब्दार्थस्यान्यार्थे' इति **नि.**

'दुर्गालङ्घितविग्रहो मनसिजं संमीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारय-
न्गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः ॥'

5 अत्र प्रकरणेनाभिधेये[1] उमावल्लभशब्दस्योमानाममहादेवीवल्लभभानुदेवनृपति-रूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते । एवमन्यत् ।

लक्षणामूलामाह—

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।**
**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥ १५ ॥**

10 'गङ्गायां घोषः' इत्यादौ जलमयाद्यर्थबोधनादभिधायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणा-मूला व्यञ्जना ।

एवं शाब्दीं व्यञ्जनामुक्त्वार्थीमाह—

**वक्तृबोद्धव्यवाक्यानामन्यसंनिधिवाच्ययोः ।**
15 **प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ॥ १६ ॥**
**वैशिष्ट्यादन्यमर्थं या बोधयेत्सार्थसम्भवा ।**

व्यञ्जनेति सम्बध्यते ।

तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये यथा मम—

'कालो मधुः कुपित एष च पुष्पधन्वा धीरा वहन्ति रतिखेदहराः समीराः ।
20 केलीवनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे पतिः कथय किं करणीयमद्य ॥'

अत्रैनं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचिद् द्योत्यते[3] ।

बोद्धव्यवैशिष्ट्ये यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
25 नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति व्यंग्यं प्रतिपाद्यदूतीवैशिष्ट्याद्बोध्यते ।

---

१ 'अभिधया' इति **ज–ब.** २ 'उमानाम्नी महादेवी तद्वल्लभ' इति **ज–ब.** ३ 'व्यज्यते' इति **नि.** ४ 'निर्दिष्ट' इति **नि.** ५ 'रन्तुम्' इत्येतदधिकं 'गतासीति' अस्मात्प्राक् **नि–**पुस्तके. ६ 'व्यङ्ग्यप्रतिपाद्य' इति **नि.**

अन्यसन्निधिवैशिष्ट्ये यथा—

'उअ णिच्चलणिप्पंन्दा[1] भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्ति व्व ॥'

अत्र बलाकाया निःस्पन्दत्वेन विश्वस्तत्वम्, तेनास्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतदिति कयापि सन्निहितं प्रच्छन्नकामुकं प्रत्युच्यते। 5

अत्रैव स्थाननिर्जनत्वरूपव्यङ्ग्यार्थ[2]वैशिष्ट्यं प्रयोजकम्[3]।

'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते' इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्यो ज्ञातव्याः। एतद्वैशिष्ट्ये यथा—

'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥' 10

अत्र नैष्यति, अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते।

चेष्टावैशिष्ट्ये यथा—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचिद्द्योत्यते। 15

एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम्।

**त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥ १७ ॥**

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा—'कालो मधुः—' इत्यादि। लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनं—' इत्यादि। व्यङ्ग्यार्थस्य यथा— 20 'उअ णिच्चल—' इत्यादि। प्रकृतिप्रत्ययादिव्यञ्जकत्वं तु प्रपञ्चयिष्यते।

**शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।**
**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥ १८ ॥**

यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते, अर्थोऽपि शब्दम्। तदेकस्य व्यञ्जकत्वेऽन्यस्य सहकारितावश्यमङ्गीकर्तव्या। 25

**अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः।**
**शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥ १९ ॥**

अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः। व्यञ्जनोपाधिको व्यञ्जकः।

---

१ 'णिप्फन्दा' इति नि. २ 'रूपं व्यङ्ग्यार्थ°' इति नि. ३ 'प्रयोजनम्' इति नि.

किं च—

तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ॥ २० ॥

अभिधाया एकैकपदार्थबोधनविरमाद्वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका
5 तात्पर्यं नाम वृत्तिः । तदर्थश्च तात्पर्यार्थः । तद्बोधकं च वाक्यमित्यभि-
हितान्वयवादिनां मतम् ॥

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः ॥

दशमः परिच्छेदः

## अर्थालङ्काराः

अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात्सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमामाह[1]—

**साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥ १४ ॥** 5

रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्, व्यतिरेके च वैधर्म्यस्याप्युक्तिः, उपमेयोपमायां वाक्यद्वयम्, अनन्वये त्वेकस्यैव साम्योक्तिरित्यस्या भेदः ।

**सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।**
**उपमेयं चोपमानं भवेद्वाच्यम्**

सा उपमा । साधारणधर्मो द्वयोः सादृश्यहेतू[2] गुणक्रिये मनोज्ञत्वादि । 10 औपम्यवाचकमिवादि । उपमेयं मुखादि । उपमानं चन्द्रादि ।

**इयं पुनः ॥ १५ ॥**

**श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ।**
**आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥ १६ ॥**

यथेववादयः शब्दा उपमानानन्तर[3]प्रयुक्ततुल्यादिपदसाधारणा अपि श्रुति- 15 मात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौत्युपमा । एवं 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेरुपादाने । तुल्यादयस्तु 'कमलेन तुल्यं मुखम्' इत्यादावुपमेय एव, 'कमलं मुखस्य तुल्यम्' इत्यादावुपमान एव, 'कमलं मुखं च तुल्यम्' इत्यादावुभयत्रापि विश्राम्यन्तीत्यर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी । एवं 'तेन 20 तुल्यं' इत्यादिना तुल्यार्थे विहितस्य वतेरुपादाने ।

**द्वे तद्धिते समासेऽथ वाक्ये**

द्वे श्रौती आर्थी च । उदाहरणम्—

'सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥' 25

अत्र क्रमेण त्रिविधा श्रौती ।

'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥'

---

१ 'उपमालङ्कारं' इति ज—ब. २ 'सादृश्यहेतुगुणक्रिये' इति ब. ३ 'उपमानान्तर' इति नि—ब.

अत्र क्रमेण त्रिविधा आर्थी ।

पूर्णा षडेव तत् ।

स्पष्टम् ।

लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ॥ १७ ॥
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ।

सा लुप्ता । तद्भेदमाह—

पूर्णावद्धर्मलोपे सा विना श्रौतीं तु तद्धिते ॥ १८ ॥

सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किं त्वत्र तद्धिते श्रौत्या असम्भवात्पञ्चप्रकारा । उदाहरणम्—

'मुखमिन्दुर्यथा, पाणिः पल्लवेन समः प्रिये ।
वाचः सुधा इवौष्ठस्ते बिम्बतुल्यो, मनोऽश्मवत् ॥'

आधारकर्मविहिते द्विविधे च क्यचि, क्यङि ।
कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ॥ १९ ॥

'धर्मलोपे लुप्ता' इत्यनुषज्यते । क्यच्-क्यङ्-णमुलः कलापमते यिन्नायिणमः[1] । क्रमेणोदाहरणम्—

'अन्तःपुरीयसि रणेषु, सुतीयसि त्वं पौरं जनं, तव सदा रमणीयते श्रीः ।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसञ्चारमत्र भुवि सञ्चरसि क्षितीश ॥'

अत्र 'अन्तःपुरीयसि' इत्यत्र सुखविहारास्पदत्वस्य, 'सुतीयसि' इत्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः । एवमन्यत्र ।

इह च यथादितुल्यादिविरहाच्छ्रौत्यादिविशेषचिन्ता नास्ति । इदं च केचिदौपम्यप्रतिपादकस्येवादेर्लोपे[2][3] उदाहरन्ति, तदयुक्तम् । क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात् । ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति, प्रत्ययेनास्वतन्त्रत्वाद् इवादिप्रयोगाभावाच्च, इति न वाच्यम् । कल्पबादावपि तथा प्रसङ्गात् । न च कल्पबादीनामिवादितुल्यतयौपम्यस्य वाचकत्वम्, क्यङादीनां तु द्योतकत्वम् । इवादीनामपि वाचकत्वे निश्चयाभावात् । वाचकत्वे वा 'समुदितं पदं वाचकम्' 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ' इति च मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति । यच्च केचिदाहुः—'वत्यादय इवाद्यर्थेऽनुशिष्यन्ते, क्यङादयस्त्वाचाराद्यर्थे' इति,

---

१ 'यिन्नागमः' इति नि, 'यिण्णायिणमः' इति ज–ब; 'यिन्नायिणमः' इति तु मुद्रितकातन्त्रसंमतः पाठः; see notes. २ 'प्रतिपादकस्य वतेः' इति ज–ब. ३ 'लोपं' इति नि.

तदपि न । न खलु क्यङादय आचारमात्रार्थाः, अपि तु सादृश्याचारार्था इति । तदेवं धर्मलोपे दशप्रकारा लुप्ता ।

उपमानानुपादाने द्विधा वाक्यसमासयोः ।

उदाहरणम्—

'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।' 5

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च 'मुखेन सदृशं' इत्यत्र 'मुखं यथेदं', 'नयनतुल्यं' इत्यत्र 'दृगिव' इति पाठे श्रौत्यपि सम्भवतीत्यनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम् ।

औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥ २० ॥ 10

क्रमेणोदाहरणम्—

'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम् ।'

'गर्दभति श्रुतिपरुषं व्यक्तं निनदन्महात्मनां पुरतः ।'

अत्र 'गर्दभति' इत्यत्रौपम्यवाचिनः क्विपो लोपः । न चेहोपमेयस्यापि लोपः । 'निनदन्' इत्यनेनैव निर्देशात् । 15

द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः ।

'तस्या मुखेन' इत्यादौ 'रम्यं' इति स्थाने 'लोके' इति पाठेऽनयोरुदाहरणम् ।

क्विप्समासगता द्वेधा धर्मेवादिविलोपने ॥ २१ ॥

उदाहरणम्— 20

'विधवति मुखाब्जमस्याः'

अत्र 'विधवति' इति मनोहरत्व-क्विप्प्रत्यययोर्लोपः । केचित्त्वत्रापि प्रत्ययलोपमाहुः । 'मुखाब्जं' इति च समासगा ।

उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि ।

यथा— 25

'अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥'

अत्र 'सहस्रायुधमिवात्मानमाचरति' इति वाक्ये उपमेयस्यात्मनो लोपः । न चेहौपम्यवाचकलोप उक्तादेव न्यायात् । अत्र केचिदाहुः-'सहस्रायुधेन सह वर्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात्ससहस्रायुधीयतीति

पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः' इति, तन्न विचार-सहम् । कर्तरि क्यचोऽनुशासनविरुद्धत्वात् ।

धर्मोपमेयलोपेऽन्या

यथा—

5 'यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे ।'

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्मः शुक्लता च लुप्तौ ।

त्रिलोपे च समासगा ॥ २२ ॥

यथा—

10 'राजते मृगलोचना ।'

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रति-पादकसाधारणधर्मोपमानानां लोपः ।

तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः ।

पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा ।
15 एषु चोपमाभेदेषु मध्येऽलुप्तसाधारणधर्मेषु भेदेषु विशेषः प्रतिपाद्यते—

एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः ॥ २३ ॥
भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ।

एकरूपे यथा उदाहृतम्—'मधुरः सुधावदधरः–' इत्यादि ।

बिम्बप्रतिबिम्बत्वे यथा—

20 'भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥'

अत्र 'श्मश्रुलैः' इत्यस्य 'सरघाव्याप्तैः इति दृष्टान्तवत्प्रतिबिम्बनम् । शब्द-मात्रेण भिन्नत्वे यथा—

'स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा ।
25 कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥'

अत्रैके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्देन निर्दिष्टे ।

एकदेशविवर्तिन्युपमा वाच्यत्वगम्यते ॥ २४ ॥
भवेतां यत्र साम्यस्य

यथा—

'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥'

अत्रोत्पलादीनां नेत्रादीनां सादृश्यं[1] वाच्यं सरःश्रीणां चाङ्गनासाम्यं गम्यम् ।

**कथिता रसनोपमा ।** 5
**यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता ॥ २५ ॥**

यथा—

'चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥'

**मालोपमा यदेकस्योपमानं बहु दृश्यते ।** 10

यथा—

'वारिजेनेव सरसी शशिनेव निशीथिनी ।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥'

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते—

'हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । 15
विमलाः कुमुदानीव तारकाः शरदागमे ॥'

'अस्य राज्ञो गृहे भान्ति भूपानां ता विभूतयः ।
पुरन्दरस्य भवने कल्पवृक्षभवा इव ॥'

अत्रोपमेयभूतविभूतिभिः 'कल्पवृक्षभवा इव' इत्युपमानभूता विभूतय आक्षिप्यन्त इत्याक्षेपोपमा । अत्रैव 'गृहे' इत्यस्य 'भवने' इत्यनेन प्रति- 20 निर्देशात्प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः । एवंविधवैचित्र्यस्य सहस्रधा दर्शनात्[2] ।

**उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ॥ २६ ॥**

अर्थादेकवाक्ये ।

यथा— 25

'राजीवमिव राजीवं जलं जलमिवाजनि ।
चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥'

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः । 'राजीवमिव पाथोजम्' इति चास्य लाटानुप्रासाद्विविक्तो विषयः । किं त्वत्रो- चितत्वादेकशब्दप्रयोग एव श्रेयान् । तदुक्तम्— 30

---

१ 'नेत्रादीनां उत्पलादिसादृश्यं' इति ब. २ 'सन्दर्शनात्' इति ज—ब.

'अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥' इति ।

**पर्यायेण द्वयोरेतदुपमेयोपमा मता ।**

एतदुपमानोपमेयत्वम् । अर्थाद्वाक्यद्वये ।

5 यथा—

'कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥'
अत्रास्य राज्ञः श्रीबुद्ध्यादिसदृशं नान्यदस्तीत्यभिप्रायः ।

**सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ॥ २७ ॥**

10 यथा—

'अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥'

'मयि सकपटं-' इत्यादौ च स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलङ्कारः । राघवानन्दमहापात्रास्तु वैसादृश्यात्स्मृतिमपि स्मरणालङ्कार-15 मिच्छन्ति । तत्रोदाहरणं तेषामेव यथा—

'शिरीषमृद्वी गिरिषु प्रपेदे यदा यदा दुःखशतानि सीता ।
तदा तदास्याः सदनेषु सौख्यलक्षाणि दध्यौ गलदश्रु रामः ॥'

**रूपकं रूपितारोपाद्विषये निरपह्नवे ।**

'रूपित-' इति परिणामाद् व्यवच्छेदः । एतच्च परिणामप्रस्तावे विवेच-20 यिष्यामः । 'निरपह्नवे' इत्यपह्नुतिव्यवच्छेदार्थम् ।

**तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥ २८ ॥**

तद्रूपकम् ।

तत्र

**यत्र कस्यचिदारोपः परारोपणकारणम् ।**

25 **तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥ २९ ॥**

**प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ।**

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा—

'आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल स्वस्त्यस्तु तव बाहवे ॥'

---

१ 'वृद्ध्यादिसदृशं' इति ज—ब. २ 'तत्प्रस्तावे' इति नि. ३ 'दाहवेपथुकर्तेऽरेः' इति सुभाषितावलिसंमतः पाठः.

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहो राहुत्वा-रोपे निमित्तम्। मालारूपं यथा—

'पद्मोदयदिनाधीशः सदागतिसमीरणः।
भूभृदावलिदम्भोलिरेक एव भवान्भुवि॥'

अत्र पद्मायाः उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनम्, भूभृतो 5 राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्यत्वाद्यारोपे[1] निमित्तम्।

अश्लिष्टशब्दनिबन्धनं केवलं यथा—

'पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥'

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्। 10 मालारूपं यथा—

'मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजते व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥'

अत्र मनोजादे राजत्वाद्यारोपश्[2]चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। '[3]एषु च राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे[4] 15 निमित्तम्' इति केचित्।

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्॥ ३०॥**
**समस्तवस्तुविषयमेकदेशविवर्ति च।**

तत्र

**आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्॥ ३१॥** 20

प्रथमं समस्तवस्तुविषयम्। यथा—

'रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे॥'

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम्।

**यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तत्।** 25

कस्यचिदारोप्यमाणस्य। यथा—

'लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते[5]॥'

अत्र लावण्यादौ मध्वाद्यारोपः[6] शाब्दः, मुखे[7] पद्मत्वारोप[8] आर्थः।

---

१ 'सूर्यत्वारोपे' इति नि.　२ 'राहुत्वाद्यारोपः' इति नि.　३ 'तत्र च' इति नि.　४ 'मण्डलत्वाद्यारोपो' इति नि.　५ 'केन दीयते' इति नि.　६ 'मधुत्वारोपः' इति नि.　७ 'मुखस्य' इति नि.　८ 'पद्मत्वाद्यारोपः' इति नि.

न चेयमेकदेशविवर्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्तमानान्मुखे चोपचरितत्वात् ।

**निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥ ३२ ॥**
**मालाकेवलरूपत्वात्**

5 तत्र मालारूपं निरङ्गं यथा—

'निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥'

केवलं यथा—

'दासे कृतागसि भवेदुचितः प्रभूणां
10 पादप्रहार इति सुन्दरि नात्र दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते मृदु पदं ननु सा व्यथा मे ॥'

**तेनाष्टौ रूपके भिदाः ।**

'चिरन्तनैरुक्ताः' इति शेषः । क्वचित्परम्परितमप्येकदेशविवर्ति यथा—

15 'खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥'

अत्रार्थः क्ष्मायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम् । अस्य भेदस्य पूर्ववन्मालारोपत्वेऽप्युदाहरणं मृग्यम् ।

**दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके ॥ ३३ ॥**

तत्रैकदेशविवर्ति श्लिष्टं यथा मम—

20 'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥'

समस्तवस्तुविषयं यथा—अत्रैव 'विचुम्बति–' इत्यादौ 'चुचुम्बे, हरिदबलामुखमिन्दुनायकेन' इति पाठे । न चात्र श्लिष्टपरम्परितम् । तत्र हि 'भूभृदावलिदम्भोलिः–' इत्यादौ राजादौ पर्वतत्वाद्यारोपं विना वर्णनीयस्य 25 राजादेर्दम्भोलितादिरूपणं[3] सर्वथैव सादृश्यासम्भवादसङ्गतम्[4] । तर्हि कथं 'पद्मोदयदिनाधीशः–' इत्यादौ परम्परितम्, राजादेः सूर्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवात्–इति न वाच्यम् । तथा हि—राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते विवक्षितम् । पद्मोदयादेरेव द्वयोः साधारणधर्मतया विवक्षितत्वात् । इह तु महीधरादेः स्तनादिना

१ 'मुखतया वर्तमानान्' इति नि. २ 'मानवाखण्डलस्य' इति ज–ब; 'मालव' इति तु अलङ्कारसर्वस्वसंमतः पाठः. ३ 'रूपाणां' इति नि. ४ 'सादृश्याभावात्' इति नि.

सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेव—इति न श्लिष्टपरम्परितम् । क्वचित्समासाभावेऽपि रूपकं दृश्यते—

'मुखं तव कुरङ्गाक्षि सरोजमिति नान्यथा ।'

क्वचिद्वैयधिकरण्येऽपि यथा—[1]

'विदधे मधुपश्रेणीमिह भ्रूलतया विधिः' । 5

क्वचिद्वैधर्म्येऽपि । यथा—

'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥' 10

अत्र[2] केषांचिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम् । एवं वक्ष्यमाणालङ्कारेषु बोध्यम् ।

**अधिकारूढवैशिष्टचं रूपकं यत्तदेव तत् ।**

तदेवाधिकारूढवैशिष्ट्यसंज्ञरूपकम्[3] । यथा मम—

'इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः 15
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥'

अत्र कलङ्कराहित्यादिनाधिकं वैशिष्ट्यम् ।

**विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ॥ ३४ ॥** 20
**परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ।**

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात्परिणामः ।

यथा—

'स्मितेनोपायनं दूरादागतस्य कृतं मम ।
स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया ॥' 25

अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते । अत्र तु नायकसम्भावनद्यूतयोः स्मिताश्लेषरूपतया । प्रथमार्धे वैयधिकरण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन ॥ रूपके 'मुखचन्द्रं पश्यामि' इत्यादावारोप्यमाणचन्द्रा-

---

१ 'विदधे··· ··· ···वैधर्म्येऽपि यथा' इत्येतत् नि—पुस्तके नास्ति; see notes.
२ 'अत्र' इत्यस्मात्प्राक् 'इदं मम' इत्यधिकं ज—ब—नि—पुस्तकेषु । तच्च भ्रममूलकमेव । See notes. ३ 'संज्ञकम्' इति नि.

देरुपरञ्जकतामात्रम्, न तु प्रकृते दर्शनादावुपयोगः। इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसम्भावनादावुपयोगः । अत एव रूपके आरोप्य-स्यावच्छेदकत्वमात्रेणान्वयः । अत्र तु तादात्म्येन । 'दासे कृतागसि—' इत्यादौ रूपकमेव, न तु परिणामः । आरोप्यमाणकण्टकस्य पादभेदैनकार्य-
5 स्याप्रस्तुतत्वात् । न खलु तत्कस्यचिदपि प्रस्तुतकार्यस्य घटनार्थमनुसन्धीयते ।

अयमपि रूपकवदधिकारूढवैशिष्ट्यो दृश्यते । यथा—

'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ।'

अत्र प्रदीपानामोषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयो-
10 गोऽतैलपूरत्वेनाधिकारूढवैशिष्ट्यम् ।

**सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ॥ ३५ ॥**
**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ।**

यत्र संशय एव पर्यवसानं स शुद्धः । यथा—

'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
15 वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥'

यत्रादावन्ते च संशय एव मध्ये निश्चयः स निश्चयमध्यः ।
यथा—

20 'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥'

अत्र मध्ये मार्तण्डाद्यभावनिश्चयो राजनिश्चये द्वितीयसंशयोत्थाना-
25 सम्भवात् ।

यत्रादौ संशयोऽन्ते च निश्चयः स निश्चयान्तः । यथा—

'किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥'

अप्रतिभोत्थापिते तु 'स्थाणुर्वा पुरुषो वा' इत्यादिसंशये नायमलङ्कारः ।

---

१ 'पादभेदेन' इति ब.

'मध्यं तव सरोजाक्षि पयोधरभरार्दितम् ।
अस्ति नास्तीति सन्देहः कस्य चित्ते न भासते ॥'

अत्रातिशयोक्तिरेव, उपमेये उपमानसंशयस्यैवैतदलङ्कारविषयत्वात् ।

**साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थितः ॥ ३६ ॥**

'मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः 5
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥'

स्वरसोत्थापिता भ्रान्तिर्नायमलङ्कारः । यथा—'शुक्तिकायां रजतम्' इति । न चासादृश्यमूला । यथा— 10

'सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥'

**क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् ।**
**एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते[१] ॥ ३७ ॥**

क्रमेणोदाहरणम्— 15

'प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः ।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः ॥'

अत्रैकस्यापि भगवतस्तद्गुणयोगादनेकधोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः । यदाहुः—

'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते । 20
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः ॥'

अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद् ग्रहीतृभेदाच्च न मालारूपकम्, न च भ्रान्तिमान्, न चायमभेदे भेद इत्येवंरूपातिशयोक्तिः । तथा[२] हि—'अन्यदेवाङ्गलावण्यम्—' इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम् । न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते । 25
प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात् । केचिदाहुः—'अयमलङ्कारो नियमेनालङ्कारान्तरविच्छित्तिमूलः[३] । उक्तोदाहरणे च शिशुत्वादीनां नियमाभिप्रायात्प्रियत्वादे[४]र्भिन्नत्वाध्यवसाय इत्यतिशयोक्तिरस्ति । तत्सद्भावेऽपि

---

१ 'इष्यते' इति ज-ब. २ 'तत्र हि' इति ज-ब. ३ 'अवश्यंभावेन' इत्येतदधिकं 'नियमेन' इत्यस्मात्परं ज-ब-पुस्तकयोः. ४ 'प्रियत्वादीनां' इति नि.

प्रत्येतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कार-प्रयोजकः । श्रीकण्ठजनपदवर्णने—'वज्रपञ्जरमिति शरणागतैः, असुरविवरमिति वातिकैः' इत्यादिश्चातिशयोक्तेर्विविक्तो विषयः । इह च रूपकालङ्कारयोगः । वस्तुतस्तु—'असुरविवरं–' इत्यादौ भ्रान्तिमन्तमेवेच्छन्ति न
5 रूपकम्, भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात् । यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीवाचस्पतिमिश्राः—'अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तते इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः' इति । इह तु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एवासुरविवराद्यारोप इति । अत्रैव च 'तपोवनमिति
10 मुनिभिः, कामायतनमिति वेश्याभिः' इत्यादौ परिणामालङ्कारयोगः ।

'गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।'

इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः प्रयोजकः । अत्र च रूपकयोगः । 'गुरुर्वचसि, पृथुरुरसि, अर्जुनो यशसि–' इत्यादिषु चास्य रूपकाद्विविक्तो विषय इति । अत्र हि श्लेषमूलातिशयोक्तियोगः ।

15 **प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।**

इयं द्विधा । क्वचिदपह्नवपूर्वक आरोपः, क्वचिदारोपपूर्वकोऽपह्नव इति । क्रमेणोदाहरणम्—

'नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः ।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥'

20 'एतद्विभाति चरमाचलचूडचुम्बि हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् ।
उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन ॥'

इदं मम ।

एवम्, 'विराजति व्योमवपुःपयोधिस्तारामयास्तत्र च फेनभङ्गाः' इत्याकारेण च प्रकृतनिषेधो बोध्यः ।

25 **गोपनीयं कमप्यर्थं द्योतयित्वा कथंचन ॥ ३८ ॥**
**यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ।**

श्लेषेण यथा—

'काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः पन्थाः ॥'

30 अत्र 'अपतितया' इत्यत्र पतिं विनेत्युक्त्वा पश्चात्पतनाभावेनेत्यन्यथा कृतम् । अश्लेषेण यथा—

---

१ 'उल्लेखभिन्नालङ्कार' इति नि. २ 'भ्रान्तिमत्त्वमेवेच्छति' इति नि. ३ 'पश्चात्' इत्येतन्नास्ति ज–ब–पुस्तकयोः.

'इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता ।
स्मरसि किं सखि कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता ॥'

वक्रोक्तौ परोक्तेरन्यथाकारः, इह तु स्वोक्तेरेवेति भेदः । गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः ।

**अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ ३९ ॥** 5

निश्चयाख्योऽयमलङ्कारः । अन्यदित्यारोप्यमाणम् ।

यथा मम—

'वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो भ्रमर[1] मुधा किं परिभ्रमसि ॥'

यथा वा— 10

'हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥'

न ह्ययं निश्चयान्तः सन्देहः, तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्था- 15
नात् । अत्र तु भ्रमरादेः संशयो[2] नायकादेर्निश्चयः । किं च न भ्रमरादेरपि संशयः, एककोट्यनधिके ज्ञाने तथा समीपगमनसम्भवात्[3] । तर्हि भ्रान्तिमानस्तु । अस्तु नाम भ्रमरादेर्भ्रान्तिः । न चेह तस्याश्चमत्कारविधायित्वम् । अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम् । किंचाविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाट्वादिरूपेणैव सम्भवति[4] तथावि- 20
धोक्तिः । न च रूपकध्वनिरयम्, मुखस्य कमलत्वेनानिर्धारणात् । न चापह्नुतिः, प्रस्तुतस्यानिषेधात् । इति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः । शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तिर्नायमलङ्कारो वैचित्र्याभावात् ।

**भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।** 25
**वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥ ४० ॥**
**वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।**
**जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥ ४१ ॥**
**तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।**

---

१ 'मधुकर न मुधा परिभ्राम्य' इति ज–ब. २ 'भ्रमरासंशयो' इति **नि.** ३ 'समीपागमनासम्भवात्' इति **ज–ब.** ४ 'एव' इत्यधिकं 'सम्भवति' इत्यस्मात्परं **ज–ब–**पुस्तकयोः.

**गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥ ४२ ॥**
**द्वात्रिंशद्विधतां यान्ति**

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा—

'ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति ।
5 सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥'

अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा ।

'ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥'

अत्र सप्रसवत्वं गुणः ।

10 'गङ्गाम्भसि सुरत्राण तव निःशाननिस्वनः ।
स्नातीवारिवधूवर्गगर्भपातनपातकी ॥'

अत्र स्नातीति क्रिया ।

'मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः ।'

अत्र चन्द्र इत्येकव्यक्तिवाचकत्वाद्द्रव्यशब्दः । एते भावाभिमाने ।
15 अभावाभिमाने यथा—

'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥'

अत्रापश्यन्ताविति क्रियाया अभावः । एवमन्यत् । निमित्तस्य गुणक्रिया-रूपत्वे यथा—'गङ्गाम्भसि—' इत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः ।
20 'अपश्यन्तौ—' इत्यादौ क्षामतागमनरूपं निमित्तं क्रिया । एवमन्यत् ।

प्रतीयमानोत्प्रेक्षा यथा—

'तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥'

अत्र लज्जयेवेतीवाद्यभावात्प्रतीयमानोत्प्रेक्षा । एवमन्यत् । ननु ध्वनिनिरू-
25 पणप्रस्तावेऽलङ्काराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम् । संप्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वम् । उच्यते—व्यङ्ग्योत्प्रेक्षायां 'महिलासहस्स—' इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः । इह तु स्तनयोर्लज्जाया असम्भवा-ल्लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेदः ।

अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह—

30 **तत्र वाच्याभिदाः पुनः ।**
**विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ॥ ४३ ॥**

तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोडश भेदास्तेषु च जात्यादीनां त्रयाणां ये द्वादश भेदास्तेषां प्रत्येकं स्वरूपफल-

हेतुगत्वेन[1] द्वादशभेदतया षट्त्रिंशद्भेदाः । द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः । अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु 'स्मरस्य विजयस्तम्भ—' इति । 'सप्रसवा इव–' इत्यादयो जातिगुणरूपाः[2] । फलोत्प्रेक्षा यथा—

'रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः । 5
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥'

अत्राख्यातुमिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम् । हेतूत्प्रेक्षा यथा—

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः । एवमन्यत् । 10

**उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः ।**

तेषु चत्वारिंशत्संख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः । तत्र निमित्तस्योपादानं यथा पूर्वोदाहृते 'स्नातीव–' इत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम् । अनुपादाने यथा—'चन्द्र इवा- 15 परः' इत्यत्र तथाविधसौन्दर्याद्यतिशयो नोपात्तः । हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव । तथा हि—'विश्लेषदुःखादिव' इत्यत्र यन्निमित्तं बद्धमौनत्वम् 'आख्यातुमिव' इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसङ्गतमेव वाक्यं स्यात् । प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह—

**प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ॥ ४४ ॥** 20

यथोदाहृते 'तन्वङ्ग्याः स्तनयुग्मेन–' इत्यत्र लज्जयेवेति हेतुरुत्प्रेक्षितः । अस्यामपि निमित्तस्यानुपादानं न सम्भवति । इवाद्यनुपादाने निमित्तस्य चाकीर्तने[3] उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात् । स्वरूपोत्प्रेक्षाप्यत्र न भवति । धर्म्यन्तर[4]तादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् । यथा—'अयं राजापरः पाकशासनः' इति । तदेवं द्वात्रिंशत्प्रकारा 25 प्रतीयमानोत्प्रेक्षा ।

**उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।**

ता उत्प्रेक्षाः । उक्तौ यथा—'ऊरुः कुरङ्गकदृशः–' इति । अनुक्तौ यथा मम प्रभावत्याम्—'प्रद्युम्नः—इह हि संप्रति दिगन्तर[5]माच्छादयता तिमिरपटलेन 30

---

१ 'हेतुगम्यत्वेन' इति **नि.** २ 'गुणस्वरूपगाः' इति **नि.** ३ 'वाकीर्तने' इति **नि.** ४ 'धर्मान्तर' इति **नि.** ५ 'प्रतिदिगन्तं' इति **ज–ब.**

'घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः ।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥'

अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तम् ।

यथा वा—

5 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।'

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः । अञ्जनवर्षणस्य तमःसम्पातः । अनयोरुत्प्रेक्षानिमित्तं च तमसोऽतिबहुलत्वं धारारूपेणाधःसंयोगश्च यथासंख्यम् । केचित्तु—'अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनं च निमित्तम्, एवं नभोऽपि वर्षणक्रियाकर्तृत्वेन' इत्याहुः ।

10 **अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं भजेत्[1] ॥ ४५ ॥**

तत्र सापह्नवोत्प्रेक्षा यथा । मम—

'अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः ।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥'

श्लेषहेतुगा यथा—

15 'मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः ।
जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥'

अत्र गुणवत्त्वे श्लेषः कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षाया हेतुः । अत्र 'जानीमहे' इत्युत्प्रेक्षावाचकम् । एवम्—

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।**

20 क्वचिदुपमोपक्रमोत्प्रेक्षा यथा—

'पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥'

इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा । पर्यवसाने तु जलधितीरे शैवलस्थितेः सम्भवोपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा । एवं विरह-
25 वर्णने—'केयूरायितमङ्गदैः-' इत्यत्र 'विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः' इत्यादौ च ज्ञेयम् । भ्रान्तिमदलङ्कारे 'मुग्धा दुग्धधिया-' इत्यादौ भ्रान्तानां बल्लवादीनां विषयस्य चन्द्रिकादेर्ज्ञानमेव नास्ति । तदुपनिबन्धनस्य कविनैव कृतत्वात् । इह तु सम्भावनाकर्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः । सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः ।
30 इह तूत्कटा सम्भाव्यभूतैका कोटिः । अतिशयोक्तौ विषयिणः प्रतीतस्य पर्यवसाने[2]ऽसत्यता प्रतीयते । इह तु प्रतीतिकाल एवेति भेदः ।

---

१ 'वहेत्' इति ज-ब. २ 'पर्यवसानात्' इति ज-ब.

'रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥'

इत्यत्र यत्तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण सन्दिह्यत इति सन्देहालङ्कार इति केचिदाहुः, तन्न । एकविषये समानबलतयानेककोटिस्फुरणस्यैव सन्देहत्वात् । इह तु तर्वादिव्याप्तेः प्रतिसम्बन्धिभेदो व्यापनादेर्निगरणेन 5 रञ्जनादेः स्फुरणं च । अन्ये तु—'अनेकत्वनिर्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकेऽपि[2] भिन्नोऽयं सन्देहप्रकारः' इति वदन्ति स्म, तदप्ययुक्तम् । निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना । तस्याश्चात्र स्फुटतया सद्भावान्नुशब्देन चेवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता । अलमदृष्टसन्देहप्रकारकल्पनया । 10

'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥'

इत्यत्र मन्येशब्दप्रयोगेऽप्युक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रं 15 नासावपह्नवोत्प्रेक्षा ।

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ ४६ ॥**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः । अस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात्साध्यत्वम् । इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम् । विषयनिगरणं चोत्प्रेक्षायां विषयस्याधःकरणमात्रेण । इहापि मुखं द्वितीयश्चन्द्र 20 इत्यादौ । यदाहुः—

'विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः ।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥' इति ।

**भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।**
**पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ॥ ४७ ॥** 25

तद्विपर्ययौ अभेदे भेदः, असम्बन्धे सम्बन्धः । सातिशयोक्तिः । अत्र भेदेऽभेदो यथा मम—

'कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् ।
कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥'

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः । यथा वा— 30 'विश्लेषदुःखादिव बद्धमौनम्' । अत्र चेतनगतमौनित्वमन्यदचेतनगतं चान्यदिति द्वयोर्भेदेऽप्यभेदः । एवम्—

---

१ 'अनिर्धारणरूप०' इति ज–ब. २ 'कोट्यधिकोऽपि' ज–ब.

'सहाधरदलेनास्या यौवने रागभाक् प्रियः ।'

अत्राधरस्य रागो लौहित्यम्, प्रियस्य रागः प्रेम, द्वयोरभेदः ।

अभेदे भेदो यथा—

'अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः ।

5 तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥'

सम्बन्धेऽसम्बन्धो यथा—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः

शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो

10 निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धः ।

असम्बन्धे सम्बन्धो यथा—

'यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् ।

तदोपमीयते तस्या वदनं चारुलोचनम् ॥'

15 अत्र यद्यर्थबलादाहृतेन सम्बन्धेन[1] सम्भावनया सम्बन्धः । कार्यकारणयोः पौर्वापर्यविपर्ययश्च द्विधा भवति । कारणात्प्रथमं कार्यस्य भावे, द्वयोः समकालत्वेन च । क्रमेण यथा—

'प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।

पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥'

20 'सममेव समाक्रान्तं द्वयं द्विरदगामिना ।

तेन सिंहासनं पित्र्यं मण्डलं च महीक्षिताम् ॥'

इह केचिदाहुः—"केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते । केशपाशादीनां कलापादिभिरध्यवसाये[2] 'अन्यदेवाङ्गलावण्यम्–' इत्यादिप्रकारेष्वव्याप्तिर्लक्षणस्य" इति, तन्न । तत्रापि ह्यनन्यदङ्गलावण्य-

25 मन्यत्वेनाध्यवसीयते । तथा हि 'अन्यदेव' इति स्थाने 'अन्यदिव' इति पाठेऽध्यवसायस्य साध्यत्वमेवेत्युत्प्रेक्षाङ्गीक्रियते[3] । 'प्रागेव हरिणाक्षीणां–' इत्यत्र बकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता । अत एवात्रापीवशब्दप्रयोगे उत्प्रेक्षा । एवमन्यत्र ।

**पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।**

30 **एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥ ४८ ॥**

---

१ 'सम्बन्धेन' इति नास्ति ज–ब–पुस्तकयोः. २ 'अन्या' इत्यधिकं 'अध्यवसाये' इत्यस्मात्परं ज–ब–पुस्तकयोः. ३ "-'अन्यदेवाङ्गलावण्य' इत्यादि ... ... एत्रेत्युत्प्रेक्षा" इत्येतन्नास्ति ज–ब–पुस्तकयोः. । प्रमदादासकृतेंग्लभाषानुवादे त्वस्त्येवैतत.

अन्येषामप्रस्तुतानां धर्मो गुणक्रियारूपः । उदाहरणम्—

'अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः ।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत ॥'

अत्र सन्ध्या[1]वर्णनस्य प्रस्तुतत्वाद्प्रस्तुतानामनुलेपनादीनामेकबोधनक्रियाभिसम्बन्धः । 5

'त्वद[2]ङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥'

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः ।

एवम्—

'दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः । 10
परोपकरणं कायादसारात्सारमाहरेत् ॥'

अत्र दानादीनां कर्मभूतानां सारतारूपैकगुणसम्बन्ध एकाहरणक्रियासम्बन्धः ।

**अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।**
**अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥ ४९ ॥** 15

क्रमेणोदाहरणम्—

'बलावलेपादधुनापि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा ।
स[3]ती च योषित्प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥'

अत्र प्रस्तुताया निश्चलायाः प्रकृतेर[4]प्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः । 20

'दूरं समागतवति त्वयि जीवनाथे[5]
भिन्ना मनोभवशरेण तपस्विनी सा ।
उत्तिष्ठति स्वपिति वासगृहं त्वदीय-
मायाति याति हसति श्वसिति क्षणेन ॥'

इदं मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः । 25

अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम् । तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा सम्भवात् ।

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥ ५० ॥**

---

१ 'तमोवर्णनस्य' इति **ब.** २ 'तदङ्ग' इति **नि.** ३ 'सतीव' इति **नि.** ४ 'प्रकृतत्वे अप्रस्तुतायाश्च' इति **नि.** ५ 'जीवनाथ' इति **ब.**

यथा—

'धन्यासि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥'

अत्र समाकर्षणमुत्तरलीकरणं च क्रियैकैव पौनरुक्त्यनिरासाय भिन्नवाच-
5 कतया निर्दिष्टा । इयं मालयापि दृश्यते । यथा—

'विमल एव रविर्विशदः शशी प्रकृतिशोभन एव हि दर्पणः ।
शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः ॥'

अत्र विमलविशदादिरर्थत[1] एक एव । वैधर्म्येण यथा—

'चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि[2] ।
10 विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥'

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।**

सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः । अयमपि साधर्म्यवैधर्म्याभ्यां
द्विधा । क्रमेणोदाहरणम्—

'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
15 अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥'

'त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा ।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥'

'वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः ।
प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम् ॥'

20 इदं पद्यं मम । अत्र 'मनः कुतो नः' इत्यस्य 'काङ्क्षति वल्लिमन्याम्'
इत्यस्य चैकरूपतयैव पर्यवसानात्प्रतिवस्तूपमैव । इह तु कर्णे मधुधारा-
वमनस्य नेत्रहरणस्य च साम्यमेव, न त्वैकरूप्यम् । अत्र[3] समर्थ्यसमर्थक-
वाक्ययोः सामान्यविशेषभावेऽर्थान्तरन्यासः[4] । प्रतिवस्तूपमादृष्टान्तयोस्तु न
तथेति भेदः ।

25 **सम्भवन्वस्तुसम्बधोऽसम्भवन्वापि कुत्रचित् ॥ ५१ ॥**
**यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ।**

तत्र सम्भवद्वस्तुसम्बन्धनिदर्शना यथा—

'कोऽत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति सम्पदम् ।
वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥'

---

१ 'विशदादेः' इति **नि.** २ 'चन्द्रिकाचाम' इति **नि.** ३ 'अथ' इति **ज—ब.**
४ 'विशेषभावी' इति **ज—नि.**

अत्र रवेरीदृशार्थवेदनक्रियायां कर्तृत्वेनान्वयः[1] सम्भवत्येव। ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्मवत्त्वात्[2]। स च रवेरस्ताचलगमनस्य परितापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति। असम्भवद्वस्तुसम्बन्धनिदर्शना[3] त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा—

'कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः। 5
अधरः किसलयलीलामाननमस्याः कलानिधिविलासम्[4] ॥'

अत्रान्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसम्भवत्तल्ललितादिसदृशं ललितादिकमवगमयत्कटाक्षविक्षेपादेः कुवलयमालादेश्च बिम्बप्रतिबिम्बभावं बोधयति। यथा वा—

'प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम्। 10
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥'

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन्राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा—

'इदं किलाव्याजमनोहरं वपुस्तपःक्षमं[5] साधयितुं य इच्छति। 15
ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥'

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्व[6]साधनेच्छा नीलोत्पलपत्रधारया समिल्लताच्छेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्यवस्यति।

यथा वा— 20

'जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥'

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्यवसानम्। एवम्—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः। 25
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

अत्र मन्मत्या सूर्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्यवसानम्।

इयं च क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति। यथा—

'योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे।
समास्वादि स मृद्वीकारसे रसविशारदैः ॥' 30

---

१ 'वक्तृत्वेन' इति **नि.** २ 'कर्मवत्त्वात्' इति **नि.** ३ 'असम्भवद्वस्तुनिदर्शना' इति **नि.** ४ 'निर्धेविलासम्' इति **ज-ब** (against the metre).
५ 'तपःक्लमं' इति **नि.** ६ 'तपःक्लमत्व' इति **नि.**

अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राक्षारसेऽसम्भवात्पूर्ववत्साम्ये पर्यवसानम्। मालारूपापि। यथा मम—

'क्षिपसि शुकं वृषदंशकवदने मृगमर्पयसि मृगादनरदने।
वितरसि तुरगं महिषविषाणे निदधच्चेतो भोगविताने॥'

5 इह बिम्बप्रतिबिम्बताक्षेपं विना वाक्यार्थापर्यवसानम्। दृष्टान्ते तु पर्यवसितेन वाक्यार्थेन सामर्थ्याद्बिम्बप्रतिबिम्बताप्रत्यायनम्। नापीयमर्थापत्तिः। तत्र 'हारोऽयं हरिणाक्षीणां–' इत्यादौ सादृश्यपर्यवसानाभावात्।

**आधिक्यमुपमेयस्योपमानान्न्यूनताथवा॥ ५२॥**
**व्यतिरेकः**

10 स[1] च

**एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा।**
**चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः॥ ५३॥**
**आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।**
**प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः॥ ५४॥**

15 उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणं च। तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयस्य निवेदनं शब्देनार्थेन[2]नाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपिशब्दादश्लेषेऽपि चतुर्विंशतिप्रकारः। उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वाष्टचत्वारिंशत्प्रकारो 20 व्यतिरेकः।

उदाहरणम्—

'अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा।'

अत्रोपमेयगतमकलङ्कत्वमुपमानगतं च कलङ्कित्वं हेतुद्वयमप्युक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम्। अत्रैव 'न कलङ्कि विधूपमम्' इति 25 पाठ आर्थम्। 'जयतीन्दुं कलङ्किनम्' इति पाठे त्विववत्तुल्यादिपदविरहा[3]दाक्षिप्तम्। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः। कलङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः। द्वयोरनुक्तौ द्वयोरनुक्तिः। श्लेषे यथा—

'अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः॥'

---

१ 'स च' इति नास्ति ज–ब–पुस्तकयोः. २ 'अर्थेन' इति नास्ति नि–पुस्तके.
३ 'इवादितुल्यादिपद' इति ज–ब.

अत्रेवार्थे वतिरिति शाब्दमौपम्यम् । उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः । गुणशब्दः श्लिष्टः । अन्ये भेदाः पूर्ववदूह्याः । एतानि चोपमेयस्योपमानादाधिक्य उदाहरणानि । न्यूनत्वे दिङ्मात्रं यथा...

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते नित्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥' 5

अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यम् । तेनात्र 'उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति केषांचिल्लक्षणे 'विपर्यये वेतिपदमनर्थकम्' इति यत्केचिदाहुः, तन्न विचारसहम् । तथाहि—अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते । अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव । अस्तु वात्रो- 10 दाहरणे यथाकथंचिद्गतिः ।

'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ॥'

इत्यादिषु का गतिरिति सुष्ठूक्तं 'न्यूनताथवा' इति ।

**सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।**
**सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ॥ ५५ ॥**

अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्यकारणपौर्वापर्यविपर्ययरूपा च । 15 अभेदाध्यवसायमूलापि श्लेषभित्तिकान्यथा च । क्रमेणोदाहरणम्—

'सहाधरदलेनास्या यौवने रागभाक्प्रियः ।'

अत्र रागपदे श्लेषः ।

'सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः ।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥' 20

इदं मम । अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदः, न तु श्लिष्टतया ।

'सममेव नराधिपेन सा गुरुसंमोहविलुप्तचेतना ।
अगमत्सह तैलबिन्दुना ननु[1] दीपार्चिरिव क्षितेस्तलम् ॥'

इयं च मालयापि सम्भवति । यथोदाहृते 'सह कुमुदकदम्बैः' इत्यादौ ।

'लक्ष्मणेन समं रामः काननं गहनं ययौ ।' 25

इत्यादौ चातिशयोक्तिमूलाभावान्नायमलङ्कारः ।

**विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु[2] वा ।**

नासाधु अशोभनं न भवति । एवं च यद्यपि शोभनत्व एव पर्यवसानं तथाप्यशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत्कस्यचिद्वर्णनीय- स्याशोभनत्वं तत्परसंनिधेरेव दोषः । तस्य पुनः स्वभावतः शोभनत्व- 30 मेवेति ।

---

१ 'तनु' इति ज—ब. २ 'न साध्वन्यत्' इति ज—ब.

यथा—

'विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत ॥

असाध्वशोभनं यथा—

5 'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना ॥'
'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥'

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः । विनाशब्दप्रयोगाभावेऽपि
10 विनार्थविवक्षायां विनोक्तिरेवेयम् । एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि
सहार्थविवक्षया भवतीति बोध्यम् ।

**समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ॥ ५६ ॥**
**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ।**

अत्र समेन कार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः । यथा—

15 'व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः ।
आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह ॥'

अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः ।

लिङ्गसाम्येन यथा—

'असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
20 अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥'

अत्र पुंस्त्रीलिङ्गमात्रेण रविसंध्ययोर्नायकनायिकाव्यवहारः । विशेषणसाम्यं
तु श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च त्रिधा । तत्र श्लिष्टतया
यथा मम—

'विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
25 दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः ॥'

अत्र मुखरागादिशब्दानां श्लिष्टता । अत्रैव हि 'तिमिरावृतिम्' इत्यत्र
'तिमिरांशुकाम्'[1] इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव । न त्वेक-
30 देशविवर्ति रूपकम् । तत्र हि तिमिरांशुकयो रूप्यरूपकभावो द्वयोरावर-
कत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न

---

१ 'तिमिरांशुकम्' इति नि.

समासोक्तिबुद्धिं व्याहन्तुमीशः । यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्तिरूपकमेव । यथा—

'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥' 5

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव । क्वचिच्च यत्र स्फुटसादृश्यमपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैकदेशविवर्ति रूपकमेव । रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरो[१]धायकत्वात् । नन्वस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटं सादृश्यमिति चेत्, सत्यमुक्तम् । अस्त्येव । किंतु वाक्यार्थपर्यालोचनसापेक्षम्, न खलु निरपेक्षम् । मुखचन्द्रादेर्मनो- 10 हरत्वादिवद्रणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात् । साधारण्येन यथा—

'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी ।
उदिते वासराधीशे स्मेराजनि सरोजिनी ॥'

अत्र निसर्गेत्यादिविशेषणसाम्यात्सरोजिन्या नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्मस्य समारोपः कारणम् । तेन विना विशेषणसाम्यमात्रेण 15 नायिकाव्यवहारप्रतीतेरसम्भवात् । औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति उपमारूपकसङ्करगर्भत्वात् । तत्रोपमागर्भत्वे यथा—

'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥'

अत्र सुवेषत्ववशात्प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेन समासः । 20 अनन्तरं च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहारप्रतीतिः । रूपकगर्भत्वे यथा—'लावण्यमधुभिः पूर्णम्—' इत्यादि । सङ्करगर्भत्वे यथा—'दन्तप्रभापुष्प—' इत्यादौ 'सुवेषा' इत्यत्र 'परीता' इति पाठे ह्युपमारूपकसाधकाभावात्सङ्करसमाश्रयणम् । समासान्तरं पूर्ववत् । समासान्तरमहिम्ना लताप्रतीतिः । 25 एषु च येषां मते उपमासङ्करयोरेकदेशविवर्तिता नास्ति तन्मते आद्यतृतीययोः समासोक्तिः । द्वितीयस्तु प्रकार एकदेशविवर्तिरूपकविषय एव । पर्यालोचने त्वाद्ये प्रकारे एकदेशविवर्तिन्युपमैवाङ्गीकर्तुमुचिता । अन्यथा—

'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रमोदयन्ती सकलङ्कमिन्दुं [२]तापं रवेरभ्यधिकं चकार ॥' 30

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः । नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणासम्भवात् । ननु 'आर्द्रनखक्षताभम्' इत्यत्र स्थितम-

---

१ 'विरोधायकत्वात्' इति **नि.** २ 'पापं' इति **ज—ब.**

प्युपमानत्वं वस्तुपर्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम् । यथा—'दध्ना जुहोति' इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि सञ्चार्यते विधिः । एवं चेन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेत्, न । एवंविधानिर्वाहे[1] कष्टसृष्टिकल्पनादेकदेशविवर्त्युपमाङ्गीकारस्यैव ज्यायस्त्वात् । अस्तु वात्र
5 यथाकथंचित्समासोक्तिः । 'नेत्रैरिवोत्पलैः पद्मैः—' इत्यादौ चान्यगत्यसम्भवात् । किं चोपमायां व्यवहारप्रतीतेरभावात्कथं तदुपजीविकायाः समासोक्तेः प्रवेशः । यदाहुः—

'व्यवहारोऽथवा तत्त्वं नौपम्ये यत्प्रतीयते ।
तन्नौपम्यं[2] समासोक्तिरेकदेशोपमा स्फुटा ॥'

10 एवं चोपमारूपकयोरेकदेशविवर्तिताङ्गीकारे तन्मूलसङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव, तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा । कार्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुःप्रकारा समासोक्तिः । सर्वत्रैवात्र व्यवहारसमारोपः कारणम् । स च क्वचिल्लौकिके वस्तुनि लौकिक-
15 वस्तुव्यवहारसमारोपः । शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः । लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः । शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा । तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम् । शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रप्रसिद्धतयेति बहुप्रकारा समासोक्तिः । दिङ्मात्रं यथा—'व्याधूय यद्वसनं—' इत्यादौ लौकिके वस्तुनि लौकिकस्य
20 हठकामुकव्यवहारादेः समारोपः ।

'यैरेकरूपमखिलास्वपि वृत्तिषु त्वां पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् ।
लोपः कृतः किल परत्वजुषो विभक्तेस्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥'

अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः । एवमन्यत्र । रूपकेऽप्रकृतमात्मस्वरूपसंनिवेशेन प्रकृतस्य रूपमवच्छादयति ।
25 इह तु स्वावस्थासमारोपेणानवच्छादितस्वरूपमेव[3] तं पूर्वावस्थातो विशेषयति । अत एवात्र व्यवहारसमारोपो न तु स्वरूपसमारोप इत्याहुः । उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम्, इह तु विशेषणमात्रस्य । अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इह त्वप्रस्तुतस्येति भेदः ।

## उक्तिर्विशेषणैः[4] साभिप्रायैः परिकरो मतः ॥ ५७ ॥

30 यथा—

'अङ्गराज सेनापते द्रोणोपहासिन् कर्ण, रक्षैनं भीमाद्दुःशासनम् ।'

---

१ 'एवंविधनिर्वाहे' इति **ज-ब.** २ 'तत्त्वमौपम्ये' इति **नि.** ३ 'अवच्छादितस्वरूपेण' इति **नि.** ४ 'उक्तैः' इति **नि.**

**शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।**

'स्वभावादेकार्थैः' इति शब्दश्लेषाद् व्यवच्छेदः । 'वाचनं' इति च ध्वनेः ।

उदाहरणम्—

'प्रवर्तयन्क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।
महसा भूयसा दीप्तो विराजति विभाकरः ॥' 5

अत्र प्रकरणादिनियमाभावाद् द्वावपि राजसूर्यौ वाच्यौ ।

**क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ॥ ५८ ॥**
**कार्यान्निमित्तं कार्यं च हेतोरथ समात्समम् ।**
**अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ॥ ५९ ॥**
**अप्रस्तुतप्रशंसा स्याद्** 10

क्रमेणोदाहणम्—

'पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥'

अथास्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम् ।

'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् । 15
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥'

अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्व-मिति सामान्ये प्रस्तुते विशेषोऽभिहितः । एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तर-न्यासः । दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते । इह तु विषामृतयोर-मृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः । 20

'इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥'

अत्र सम्भाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्येभ्यो वदनादिगत- 25 सौन्दर्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते ।

'गच्छामीति मयोक्तया मृगदृशा निश्वासमुद्रेकिणं
त्यक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा ।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥' 30

अत्र कस्यचिदगमनरूपे कार्ये प्रस्तुते कारणमभिहितम् । तुल्ये प्रस्तुते तुल्या-भिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च । श्लेषमूलापि समासोक्तिव-

द्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा। क्रमेण यथा–

'सहकारः सदामोदो वसन्तश्रीसमन्वितः।
समुज्ज्वलरुचिः श्रीमान्प्रभूतोत्कलिकाकुलः॥'

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात्सहकारात्कस्यचित्प्रस्तुतस्य नायकस्य 5 प्रतीतिः।

'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद्यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक्प्रकटिता पुरुषोत्तमेन॥'

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते।

10 सादृश्यमात्रमूला यथा—

'एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति।
अम्बरमावृतिशून्यं हर हरि[1] शरणं विधेः करुणा॥'

अत्र कपोतादप्रस्तुतात्कश्चित्प्रस्तुतः प्रतीयते। इयं च क्वचिद्वैधर्म्येणापि भवति।

15 'धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥'

अत्र वाता धन्या अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम्। तत्र सम्भवे उक्तोदाहरणान्येव।

असम्भवे यथा—

20 'कोकिलोऽहं भवान्काकः समानः कालिमावयोः।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः॥'

अत्र काककोकिलयोर्वाकोवाक्यं प्रस्तुताध्यारोपणं विनासम्भवि।

उभयरूपत्वे यथा—

'अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
25 कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः॥'

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि। अन्येषां तु सम्भवीत्युभयरूपत्वम्। अस्याश्च समासोक्तिवद् व्यवहारसमारोपप्राणत्वाच्छब्दशक्तिमूलाद्वस्तुध्वनेर्भेदः। उपमाध्वनावप्रस्तुतस्य व्यंग्यत्वम्। एवं समासोक्तौ। श्लेषेऽपि द्वयोरपि वाच्यत्वम्।

30 **उक्ता व्याजस्तुतिः पुनः।**
**निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः॥ ६० ॥**

---

१ 'हरिहरि' इति ज–ब.

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः । क्रमेण यथा—

'स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव ।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो[1] जाताः ॥'

इदं मम । 5

'व्याजस्तुतिस्तव पयोद मयोदितेयं यज्जीवनाय[2] जगतस्तव जीवनानि ।
स्तोत्रं तु ते महदिदं घन धर्मराजसाहाय्यमर्जयसि यत्पथिकान्निहत्य ॥'

## पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।

उदाहरणम्—

'स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः । 10
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥'

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्यद्वारेणाभिहितम् । न चेदं कार्यात्कारणप्रतीतिरूपाप्रस्तुतप्रशंसा । तत्र कार्यस्याप्रस्तुतत्वात् । इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्यमपि कारणवत्प्रस्तुतम् । एवं च— 15

'अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥'

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत्कार्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्यायोक्तमेव । 20

'राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥'

अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम् । 'कार्यमपि वर्णनार्हत्वेन प्रस्तुतम्' इति केचित् । 25

अन्ये तु—'राजशुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैव' इत्याहुः ।

## सामान्यं वा विशेषेण विशेषस्तेन वा यदि ॥ ६१ ॥
## कार्यं च कारणेनेदं कार्येण च समर्थ्यते । 30

---

१ '( द्विट् ) स्त्रियो' इति **नि.**  २ 'सञ्जीवनाय' इति **नि.**

**साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥ ६२ ॥**

क्रमेणोदाहरणम्—

'बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥'

5 अत्र द्वितीयार्धगतेन विशेषरूपेणार्थेन प्रथमार्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते ।

'यावदर्थपदां[1] वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥'

'पृथ्वि स्थिरा भव भुजङ्गम धारयैनां
10 त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥'

अत्र कारणभूतं हरकार्मुकाततज्यीकरणं पृथिवीस्थैर्यादेः कार्यस्य समर्थकम् ।

'सहसा विदधीत न क्रियाम्—' इत्यादौ सम्पद्वरणं[2] कार्यं सहसाविधाना-
15 भावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् । एतानि साधर्म्ये उदाहरणानि । वैधर्म्ये यथा—

'इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥'

अत्र सामान्यं विशेषस्य समर्थकम् । 'सहसा विदधीत—' इत्यत्र सहसा-
20 विधानाभावस्यापत्पदत्वं[3] विरुद्धं कार्यं समर्थकम् । एवमन्यत् ।

**हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।**

तत्र वाक्यार्थता यथा—

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
25 येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन[4] न क्षम्यते ॥'

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः । पदार्थता यथा मम—

'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥'

30 अत्र द्वितीयार्धे प्रथमार्धमेकपदं हेतुः । अनेकपदं यथा मम—

---

१ 'अर्थ्यपदां' इति नि. २ 'सम्पत्करणं' इति नि. ३ 'आपत्प्रदत्वं' ज–नि. ४ 'देवेन' इति नि.

'पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥'

इह केचिद् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम् । तथाह्यत्र हेतुस्त्रिधा भवति—ज्ञापको निष्पादकः समर्थकश्चेति । तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थ- 5 कोऽर्थान्तरन्यासस्य, इति पृथगेव कार्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात् । तथाहि—'यत्त्वन्नेत्र-' इत्यादौ चतुर्थपादवाक्यमन्यथा साकाङ्क्षतयासमञ्जसमेव स्यात् इति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्षते । 'सहसा विदधीत-' इत्यादौ तु

'परापकारनिरतैर्दुर्जनैः सह सङ्गतिः । 10
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥'

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसाविधानाभावं सम्पद्वरणं सोपपत्तिकमेव करोतीति पृथगेव कार्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात् ।

'न धत्ते शिरसा गङ्गां भूरिभारभिया हरः । 15
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा ॥'

इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः । वैचित्र्यस्यैवालङ्कारत्वात् ।

## अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनात् ॥ ६३ ॥

यथा— 20

'जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः ।
उत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे ॥'

अत्र रूपकवशाद्विच्छित्तिः ।

यथा वा—

'यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः । 25
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥'

अत्र कविप्रौढोक्तिवशाद्विच्छित्तिः । उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः ।

## अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह ।

यथा मम—'तारुण्यस्य विलासः-' इत्यत्र वशीकरणहेतुर्नायिका वशीकर- 30 णत्वेनोक्ता । विलासहासयोस्त्वध्यवसायमूलोऽयमलङ्कारः ।

---

१ 'असाकाङ्क्षतया' इति ब.

**अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ॥ ६४ ॥**

यथा—

'कुपितासि यदा तन्वि निधाय करजक्षतम् ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥'

5 अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात्पृथगलङ्कारत्वमेव न्याय्यम् ।

**वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।**
**निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥ ६५ ॥**

तत्र वक्ष्यमाणविषये क्वचित्सर्वस्यापि सामान्यतः सूचितस्य निषेधः, 10 क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ । उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वौ । इत्याक्षेपस्य चत्वारो भेदाः ।

क्रमेण यथा—

'स्मरशरशतविधुराया भणामि सख्याः कृते किमपि ।
क्षणमिह विश्राम्य[1] सखे निर्दयहृदयस्य किं वदाम्यथवा ॥'

15 अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः ।

'तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् ।
हन्त नितान्तमिदानीमाः किं हतजल्पितैरथवा ॥'

अत्र मरिष्यतीत्यंशो नोक्तः ।

'बालअ णाहं दूई[2] तीअ[3] पिओसि त्ति ण मह वावारो ।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो ॥'

अत्र दूतीत्वस्य वस्तुनो निषेधः ।

'विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् ।
दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥'

अत्र कथनस्योक्त[4]स्यैव निषेधः । प्रथमोदाहरणे सख्या अवश्यंभावि 25 मरणमिति विशेषः प्रतीयते । द्वितीयेऽशक्यवक्तव्यत्वादि । तृतीये दूतीत्वे यथार्थवादित्वम् । चतुर्थे दुःखस्यातिशयः । न चायं विहितनिषेधः । अत्र निषेधस्याभासत्वात् ।

**अनिष्टस्य तथार्थस्य विध्याभासः परो मतः ।**

तथेति पूर्ववद्विशेषप्रतिपत्तये । यथा—

---

१ 'विश्रम्य' इति नि. २ 'दूती' इति ज-ब-नि; 'दूई' इति अलङ्कारसर्वस्वसंमतः पाठः. ३ 'तुअ' इति ज-ब-नि; 'तीअ' इत्यलङ्कारसर्वस्व-रामचरण-संमतः पाठः. ४ 'कथनस्यैव' इति ज-ब.

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥'

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्यवस्यति । विशेषश्च गमनस्यात्यन्तपरिहार्यत्वरूपः प्रतीयते ।

**विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ॥ ६६ ॥** 5
**उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्तिता ।**

विना कारणमुपनिबध्यमानोऽपि कार्योदयः किञ्चिदन्यत्कारणमपेक्ष्यैव भवितुं युक्तः । तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा । यथा—

'अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥' 10

अत्र वयोरूपनिमित्तमुक्तम् । अत्रैव 'वपुर्भाति मृगीदृशः' इति पाठेऽनुक्तम् ।

**सति हेतौ फलाभावो[1] विशेषोक्तिस्तथा द्विधा ॥ ६७ ॥**

तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । 15
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥'

अत्र महामहिमशालित्वं निमित्तमुक्तम् । अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले' इति पाठे त्वनुक्तम् । अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तस्यैव भेद इति पृथङ् नोक्तम् । यथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । 20
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥'

अत्र तनूहरणेनापि बलाहरणे निमित्तमचिन्त्यम् । इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबध्यते । विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेन । एवं च 'यः कौमारहरः–' इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना । 'यः कौमार–' इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः । एवं चात्र विभावनाविशेषोक्त्योः सङ्करः । 25 शुद्धोदाहरणं तु मृग्यम् ।

**जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।**
**क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ॥ ६८ ॥**
**विरुद्धमिव[2] भासेत विरोधोऽसौ दशाकृतिः ।** 30

---

१ 'फलाभावे' इति नि. २ 'विरुद्धमेव' इति नि.

क्रमेण यथा—

'तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥
'सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते ।
5 द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥'
'अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥'
'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥'
10 'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥'

'त्वद्वाजि–' इत्यादि । 'वल्लभोत्सङ्ग–' इत्यादिश्लोके चतुर्थपादे 'मध्यन्दिन-दिनाधिपः' इति[1] पाठे द्रव्ययोर्विरोधः । अत्र 'तव विरहे–' इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्महृदयभेदनसूर्यैर्जातिगुणक्रियाद्रव्य-15 रूपैरन्योन्यं विरोधो मुखत आभासते । विरहहेतुकत्वात्समाधानम् । अत्र 'अजस्य–' इत्यादावजत्वादिगुणस्य जन्म[2]ग्रहणादिक्रियया विरोधः । भगवतः प्रभावस्यातिशयित्वात्तु समाधानम् । 'त्वद्वाजि–' इत्यादौ 'हरोऽपि शिरसा गङ्गां न धत्ते' इति विरोधः । 'त्वद्वाजि–' इत्यादिकविप्रौढोक्त्या तु समाधानम् । स्पष्टमन्यत् । विभावनायां कारणाभावेनोपनिबध्यमानत्वात्कार्यमेव बाध्यत्वेन 20 प्रतीयते । विशेषोक्तौ च कार्याभावेन[3] कारणमेव । इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः ।

## कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः ॥ ६९ ॥

यथा—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
25 सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैर्[4]पटवो जाताः स्म इत्यद्भुतम् ॥'

अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः ।

## गुणौ क्रिये वा यत्[5]स्यातां विरुद्धे हेतुकार्ययोः ।

---

१ 'इति' इत्येतन्नास्ति नि–पुस्तके. २ 'जन्म' इति नास्ति ब–पुस्तके; 'गुणस्य ग्रहणातिक्रियया' इति ज. ३ 'कार्यभावेन' इति नि. ४ 'जनाश्रितैः इति ज–ब. ५ 'चेद्' इति नि.

**यद्वारब्धस्य वैकल्यमनर्थस्य च सम्भवः ॥ ७० ॥**

**विरूपयोः सङ्घटना या च तद्विषमं मतम् ।**

क्रमेण यथा—

'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥' 5

अत्र कारणरूपासिलतायाः 'कारणगुणा हि कार्यगुणमारभन्ते' इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः ।

'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः । 10

'अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥'

अत्र केवलं काङ्क्षितधनलाभो नाभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

'क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम् ॥' 15

अत्र वनराजश्रियोर्[2]विरूपयोः सङ्घटना । इदं मम ।

यथा वा—

'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥'

**समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ॥ ७१ ॥** 20

यथा—

'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥'

**विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ।**

यथा— 25

'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥'

**आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ॥ ७२ ॥**

आश्रयाधिक्ये यथा—

'किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र । 30
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥'

---

१ 'वैफल्य' इति ज–ब. २ 'राज्यश्रियोः' इति नि.

आश्रिताधिक्ये यथा—

'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत[1]।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा[2] मुदः ॥'

**अन्योन्यमुभयोरेकक्रियायाः करणं[3] मिथः ।**

5 'त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥'

**यदाधेयमनाधारमेकं चानेकगोचरम् ॥ ७३ ॥**
**किञ्चित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा ।**
**कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥ ७४ ॥**

10 क्रमेण यथा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव[4] कवयो न ते वन्द्याः ॥'
'कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरा ॥'

15 'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'[5]

**व्याघातः स तु केनापि वस्तु येन यथा कृतम् ।**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ ७५ ॥**

यथा—'दृशा दग्धं मनसिजम्—' इत्यादि ।

20 **सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ।**

व्याघात इत्येव ।

'इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग भवता गन्तुमधिकं
25 न मृद्वी सोढा यद्विरहकृतमायासमसमम् ॥'

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम् । नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् ।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ॥ ७६ ॥**

---

१ 'सविकासं' इति **नि.** २ 'सम्भृता' इति **ज—ब.** ३ 'कारणं' इति **नि.** ४ 'कथमपि' इति **ज—ब**; 'कथमिह' इति रुद्रटकृतकाव्यालङ्कारसंमतः पाठः. ५ 'इति रघौ' इत्यधिकं **ज—ब—**पुस्तकयोः.

तदा कारणमाला स्यात्

यथा

'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः ॥'

तन्मालादीपकं पुनः । 5

धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम् ॥ ७७ ॥

यथा—

'त्वयि सङ्गरसंप्राप्ते धनुषासादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥'

अत्रासादनक्रिया धर्मः । 10

पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ॥ ७८ ॥

क्रमेणोदाहरणम्—

'सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीता सङ्गीतं सस्मरोदयम् ॥' 15

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥'

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितं च दृश्यते ।

यथा—

'वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु । 20
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम् ॥'

एवमपोहनेऽपि ।

उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ।

यथा—

'राज्ये सारं वसुधा वसुधायां[१]मपि पुरं पुरे सौधम् । 25
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥ ७९ ॥

यथा—

'उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्रासय । 30

---

१ 'वसुन्धरायाम्' इति रुद्रटकाव्यालङ्कारे ( ७।९७ ).

इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥'

**क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।**
**भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥ ८० ॥**

5 क्रमेण यथा—

'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे क्रमेण नाभिं प्रथमोदबिन्दवः ॥'

'विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥'

10 'विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥'

'ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥'

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च । क्वचिदाधेयमपि । यथा—
15 'स्थिताः क्षणम्—' इत्यत्रोदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन् । 'विचरन्ति—' इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद् भेदः । विनिमयाभावात्परिवृत्तेः ।

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।**

20 क्रमेणोदाहरणम्—

'दत्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्वा गृहीतो मदनज्वरः ॥'

अत्र प्रथमेऽर्धे समेन, द्वितीयेऽर्धे न्यूनेन ।

'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
25 येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'

अत्राधिक्येन ।

**प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ॥ ८१ ॥**
**तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ।**
**परिसंख्या**

30 क्रमेणोदाहरणम्—

'किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥'

अत्र व्यवच्छेद्यं रत्नादि शाब्दम्।

'किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम्॥'

अत्र व्यवच्छेद्यं पापाद्यार्थम्। अनयोः प्रश्नपूर्वकत्वम्।
अप्रश्नपूर्वकत्वे यथा— 5

'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥'
'बलमार्तभयोपशान्तये विदुषां संमतये बहु श्रुतम्।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम्॥'

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा— 10

'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराश्चापेषु गुणच्छेदाः–' इत्यादि।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि॥ ८२॥**
**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम्।**

यथा मम— 15

'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।
अहमेकाकिनी बाला तवेह वसतिः कुतः॥'

अनेन पथिकस्य वसतियाचनं प्रतीयते।

'का विसमा देव्वगई, किं लद्धव्वं जणो गुणग्गाही।
किं सोक्खं सुकलत्तं, किं दुग्गेज्झं खलो लोओ॥' 20

अत्रान्यव्यपोहे तात्पर्याभावात्परिसंख्यातो भेदः। न चेदमनुमानम्। साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गम्। उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते॥ ८३॥**

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं 25 भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका। अत्र च क्वचित्प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात्प्राकरणिकार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणम्—

'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥' 30
'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अतितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्॥'

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते 'हारो-

ऽयम्–' इत्यादौ । न चेदमनुमानम् । समानन्यायस्य सम्बन्धरूपत्वाभावात् ।

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।**

यथा—'नैमयन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा ।' अत्र शिरसां धनुषां च नमनयोः सन्धिविग्रहोपलक्षणत्वात्, सन्धिविग्रह-
5 योश्चैकदा कर्तुमशक्यत्वाद्विरोधः । स चैकपक्षाश्रयणपर्यवसानः । तुल्य-बलत्वं चात्र धनुःशिरोनमनयोर्द्वयोरपि स्पर्धया सम्भाव्यमानत्वात् । चातुर्यं चात्रौपम्यगर्भत्वेन । एवं 'कर्णपूरीक्रियन्ताम्' इत्यत्रापि । एवं 'युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः' । अत्र श्लेषावष्टम्भेन चारुत्वम् ।

'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा ।'

10 इत्यत्र चातुर्याभावान्नायमलङ्कारः ।

**समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके ॥ ८४ ॥**
**खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।**
**गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये ॥ ८५ ॥**

यथा मम—

15 'हंहो धीरसमीर हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥'

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां
20 हेत्वन्तराणामुपादानम् । अत्र सर्वेषामपि हेतूनां शोभनत्वात्सद्योगः । अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः ।

सदसद्योगो यथा—

'शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
25 प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥'

इह केचिदाहुः—'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वमपि सद-सद्योगः' इति । अन्ये तु 'शशिप्रभृतीनां स्वतःशोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति सदसद्योगः ।' अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनु-

---

१ 'नम्यन्ताम्' इति ज–ब; 'नमन्तु' इति अलङ्कारसर्वस्वसंमतः पाठः २ 'दह-सीति' इति नि.

चितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वं, 'मनसि सप्त शल्यानि' इति सप्तानामपि शल्यत्वेनोपसंहारश्च, 'नृपाङ्गनगतः खलः' इति प्रत्युत क्रमभेदाद्दुष्टत्वमावहति, सर्वत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति । इह च खले कपोतवत्सर्वेषां कारणानां साहित्येनावतारः । समाध्यलङ्कारे त्वेककार्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः । 5

'अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम् ।
मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥'

अत्राद्येऽर्धे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः । उभयोर्यौगपद्ये यथा—

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥' 10

'धुनोति चासिं तनुते च कीर्तिम् ।'

इत्यादावेकाधिकरणेऽप्येष दृश्यते । न चात्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्तिमूलत्वाभावः ।

**समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात् ।** 15

यथा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ॥ ८६ ॥**
**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ।** 20

तस्यैवेति रिपोरेव । यथा मम—

'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥'

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ॥ ८७ ॥**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ।** 25

क्रमेण यथा—

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्–' इत्यादि ।

'तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा ।

---

१ 'चमत्कारविधायित्वं ... ...विशेष्यस्यैव' इति एतन्नास्ति नि–पुस्तके, तच्च प्रामादिकमिव प्रतिभाति । टीकायां व्याख्यातत्वात् ।

धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥'
अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम् ।

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ॥ ८८ ॥**
5 **कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ।**

यथा—
'अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'
अत्र प्रथमपादेनोत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः । यथा—
10 'ब्रह्मेव ब्राह्मणो वदति' इत्यादि ।

**मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा[1] ॥ ८९ ॥**

अत्र समानलक्षणं वस्तु क्वचित्सहजं क्वचिदागन्तुकम् । क्रमेण यथा—
'लक्ष्मीवक्षोजकस्तूरिलक्ष्म वक्षःस्थले हरेः ।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया ॥'
15 अत्र भगवतः श्यामा कान्तिः सहजा ।
'सदैव शोणोत्पलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ॥'
अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।**

20 यथा—
'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥'
मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम् । इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

25 **तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ॥ ९० ॥**

यथा—
'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः[2] ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥'
मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम् । इह तु वस्त्वन्तर-
30 गुणेनाक्रान्तता प्रतीयत इति भेदः[3] ।

---

१ 'लक्षणा' इति ब. २ 'पर्यस्तपातिनः' इति ज-ब. ३ 'भेदः' इत्येतन्नास्ति ज-ब-पुस्तकयोः.

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ।**

यथा—

'हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौर निषण्णोऽपि कथं नाम न रज्यसि ॥'

यथा वा— 5

'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥'

पूर्वत्रातिरक्तहृदयसम्पर्कोप्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहण- 10 रूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ॥ ९१ ॥**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ।**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा—

'वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे । 15
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥'

अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुष- चिह्नखड्गलेखालिखनेन सूचितम् । इङ्गितेन यथा—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥' 20

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकाल- भाविना पद्मनिमीलनेन प्रकाशितः ।

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ॥ ९२ ॥**

यथा—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस- 25
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

नेयं प्रथमापह्नुतिः । अपह्नवकारिणो विषयस्यानभिधानात् । द्वितीया- पह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः । 30

---

१ 'रोमाञ्चातिविसंस्थुल' इति ज—ब.

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः ।

यथा मम—

'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपच्चा-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण ।
स्फूर्जद्धूङ्कारघोषः प्रतिदिशमखिलान्द्रावयन्नेषै जन्तू-
न्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥'

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ॥ ९३ ॥**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ।**

यथा—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'

यथा वा—

'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥'

न चायं प्रसादाख्यो गुणः । भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न चाद्भुतो रसः । विस्मयं प्रत्यस्य हेतुत्वात् । न चातिशयोक्तिरलङ्कारः । अध्यवसायाभावात् । न च भ्रान्तिमान् । भूतभाविनोर्भूतभावितयैव प्रकाशनात् । न च स्वभावोक्तिः । तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम् । अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति । यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः ।

'अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥'

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः । वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात्[3] । यत्पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः । यथोदाहृते 'आसीदञ्जनम्—' इत्यादौ ।

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ॥ ९४ ॥**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।**

क्रमेणोदाहरणम्—

१ 'धारयन्' इति ज—ब. २ 'एव' इति नि. ३ 'सरूपत्वात्' इति नि.

'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥'
'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥'

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ॥ ९५ ॥** 5
**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।**
**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥ ९६ ॥**

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलङ्कारो यथा—'अयं स रसनोत्कर्षी–' इत्यादि । अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात्प्रेयः । यथा मम— 10
'आमीलितालसविवर्तिततारकाक्षीं मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥'

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा—
'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः । 15
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परीहारः । यथा—
'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥' 20

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

**भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ।**

तदाख्यका भावोदय–भावसन्धि–भावशबलनामानोऽलङ्काराः । क्रमेणोदाहरणम्—
'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । 25
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥'

अत्र त्रासादयो राजविषयरतिभावस्याङ्गम् ।
'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम् । 30
'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

